**(सू) विशोका वा ज्योतिष्मती ।। ३६ ।।**

टि. [विगतशोका प्रकाशरूपा च प्रवृत्तिः मनसः स्थैर्यहेतुः । सा च अन्तःकरणस्य पुरुषस्य वा योगजसाक्षात्काररूपा वृत्तिः । तयोश्च विधूतरजस्तमोमलतया सत्त्वमयत्वेन सुखमयत्वात् विशोकत्वम् । प्रकाशमयत्वात् ज्योतिष्मतीत्वम् ।]

यो - अष्टदलहृदम्बुजं रेचकेनोर्ध्वमुखं नीत्वा तत्कर्णिकास्थायां सुषुम्नाख्यायां नाड्यां सौरचान्द्रमसवैद्युतादिप्रभानिभस्य चित्ततत्त्वस्य ध्यानात्तज्ज्योतिर्गोचरा संविज्ज्योतिष्मती विशोका शोकशून्या प्रवृत्तिरुत्पन्ना सती मनसः स्थितिं संपादयति । ततःतन्मन एकाग्रतां लभत इत्यर्थः ।। ३६ ।।

**(सू) वीतरागविषयं वा चित्तम् ।। ३७ ।।**

यो - शुकादीनां यद्वीतरागं चित्तम्, तस्य ध्यानात् योगिनश्चित्तं नीरागं सदेकाग्रतां लभत इत्यर्थः ।। ३७ ।।

**(सू) स्वप्ननिद्राज्ञानालम्बनं वा ।। ३८ ।।**

यो - स्वप्ने शास्त्रीयं यन्मनोहरं बस्तु दृष्टं, सुषुप्तौ यत्सुखं ज्ञायते तत्र ध्यानात्तज्ज्ञेयालम्बनं चित्तं निश्चलं सद्एकाग्रतां लभत इत्यर्थः ।।३८।।

**(सू) यथाभिमतध्यानाद्वा ।। ३९ ।।**

यो - किं बहुना ? यथेष्टं यद्यच्छास्त्रार्थं दैवं रूपम्, तद्ध्यानाच्चित्तम् अचञ्चलं सदेकाग्रतां लभत इत्यर्थः ।। ३९ ।।

अ. ननु एतैरुपायैरेकाग्रतालाभे किं ज्ञापकमित्यत्राह—

**(सू) परमाणुपरममहत्वान्तोऽस्य वशीकारः ।। ४० ।।**

यो - अस्यैकाग्रतामापन्नस्य चित्तस्य सूक्ष्मे स्थूले वा वस्तुनि निविशमानस्य परमाण्वन्तः परममहत्त्वान्तो वशीकारोऽप्रतिघातो भवति इत्यर्थः ।। ४० ।।

अ. इत्थमेकाग्रतोपायान्सावान्तरफलान्उक्त्वा तत्समुत्पन्नैकाग्रताभिवृद्धिलक्षणस्य सबीजसमाधेः सविषयं स्वरूपमाह—

(सू) क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः ।। ४१ ।।

टि. [क्षीणा वृत्तयो यस्य तस्य चेतसः स्फटिकमणेरिव ग्रहीतृग्रहणग्राह्येषु तत्स्थं तदेकाग्रता तदञ्जनता तन्मयत्वं तद्रूपपरिणामो भवतीति ।]

यो - अभिजातस्य अत्यवदातस्य स्फटिकमणेर्यथा जपाकुसुमोपरागात् स्वरूपाभिभवेन रक्ताकारता भवति, एवं क्षीणवृत्तेर्विधूतरजस्तमोवृत्तिकस्य चित्तस्य भूतेन्द्रियतन्मात्रान्तःकरणरजस्तमोलेशानुविद्धाहंकारविधूतरजस्तमोमलशुद्धसत्त्वात्मकमहत्तत्त्वेषु ग्राह्यग्रहणग्रहीतृषु तत्स्थस्य तदुपरक्तस्य तदञ्जनता स्वरूपपरित्यागेन तत्तद्रूपता तस्य सम्यगापत्तिः संप्रज्ञातसमापत्तिः इत्यर्थः ।। ४१ ।।

अ. इत्थं सामान्यतः संप्रज्ञातसमापत्तिमुक्त्वा अधुना वितर्कविचाररूपग्राह्यसमापत्तेः सवितर्कनिर्वितर्कसविचारनिर्विचारभेदेन चातुर्विध्यं आह त्रिभिः—

(सू) तत्र शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का ।। ४२ ।।

टि. [संप्रज्ञाताख्या समापत्तिः पुनः अवान्तरभेदात् चतुर्धा भवति - सवितर्का, निर्वितर्का, सविचारा, निर्विचारा चेति । तत्र सवितर्कायाः स्वरूपमुच्यते । शब्दः, अर्थः- जात्यादिः, ज्ञानं - बुद्धिवृत्तिः, विकल्पः एते यस्यां भासन्ते, सा सवितर्का]

यो - गौरिति शब्दः गौरित्यर्थः गौरिति ज्ञानम्, तेषां परस्परतादात्म्यगोचरा ये विकल्पाःतैः संकीर्णा तत्तुल्या सवितर्का समापत्तिः, तस्या विकल्पत्वाविशेषात् इत्यर्थः ।। ४२ ।।

(सू) स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ।। ४३ ।।

यो - शब्दज्ञानाभ्यां विकल्पित एवार्थे शब्दसङ्केतो गृह्यते, तस्य स्मृत्या शाब्दबोधो विकल्प एव जायते । अतः संकेतस्मृतेः परिशुद्धौ प्रलये सति तत्कार्यस्य विकल्पस्य प्रलयात् समाधिभावना स्वीयभावनात्वशून्येव भूत्वा अविकल्पितार्थमात्रेणैव निर्भास्यमाना निर्वितर्का समापत्तिः इत्यर्थः ।। ४३ ।।

अ. उक्तन्यायमन्यत्रातिदिशति—

(सू) एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ।। ४४ ।।

टि. [स्थूलविषये समापत्तिद्वैविध्यं प्रदर्श्य सूक्ष्मेऽपि विषये तस्य द्वैविध्यम् अतिदिशति]

यो - एतयैव विकल्पितस्थूलाकारया सवितर्कया अविकल्पितस्थूलाकारया निर्वितर्कया च सूक्ष्मविषया स्वशब्दज्ञानाभ्यामभेदेन विकल्पितसूक्ष्मतन्मात्रेन्द्रियगोचरा सविचारा अविकल्पितसूक्ष्मतन्मात्रेन्द्रियगोचरा निर्विचारा च व्याख्याता भवति इत्यर्थः ।। ४४ ।।

अ. किं निर्विचारसमापत्तेस्तन्मात्रेष्वेवावसानम्? नेत्याह—

(सू) सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ।। ४५ ।।

यो - अस्याः समापत्तेः सूक्ष्मविषयत्वमलिङ्गे प्रधाने पर्यवस्यति। तथाहि—तन्मात्रेभ्योऽहंकारः सूक्ष्मः, तस्मादपि महान्, ततोऽपि प्रधानम्। तद्धि न लीयत इत्यलिङ्गमुच्यते। ततः परं न सूक्ष्मा प्रकृतिः समस्ति। पुरुषस्तु न प्रकृतिः सर्गे निमित्तमात्रमिति ध्येयम् ॥ ४५ ॥

अ. संप्रज्ञातसमापत्तीरुपसंहरति—

**(सू) ता एव सबीजः समाधिः ॥ ४६ ॥**

टि. [एतावत्पर्यन्तं स्थूलविषयाः सूक्ष्मविषयाश्च चतस्रः समापत्तयः उक्ताः। एता एव 'संप्रज्ञातसमाधयः'।

यो - ता एव पूर्वोक्ता एव विवेकख्यात्यभावेन बन्धबीजसत्त्वात्सबीजः समाधिः इत्यर्थः ॥ ४६ ॥

अ. इत्थं संप्रज्ञातमुपसंहृत्य असंप्रज्ञातमुपायप्रत्ययमुपसंहर्तुं तस्य पूर्वरङ्गं निर्विचारातिशयमाह—

**(सू) निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ ४७ ॥**

टि. [निर्विचारस्य प्रकृष्टाभ्यासवशात् वैशारद्ये-नैर्मल्ये सति अध्यात्म-प्रसादः समुपजायते। चित्तस्य तदेव वैशारद्यं यत्स्थितौ दार्ढ्यम्।]

यो - निर्विचारस्य प्रधानपर्यन्तसूक्ष्मगोचरस्य यद्वैशारद्यमभ्यासपाटवेन तस्य प्रधानान्तन्यग्भावाच्चितिशक्तेरुद्वेगः, तस्मिन् सत्यध्यात्मनश्चिति-शक्तेः प्रसादः ख्यातिः जायते ॥ ४७ ॥

अ. ततः किम्—

**(सू) ऋतंभरा तत्र प्रज्ञा ॥ ४८ ॥**

टि. [ऋतं सत्यं बिभर्ति कदाचिदपि न विपर्ययेण आच्छाद्यते, सा ऋतम्भरा तस्मिन् सति भवति तस्माच्च प्रज्ञालोकात् सर्वं यथावत् पश्यन् योगी प्रकृष्टं योगं प्राप्नोति]

यो - तत्र पुरुषख्यातौ सत्याम् ऋतं सत्यमात्मानं बिभर्ति प्रकाशयतीति ऋतंभरा प्रज्ञा धर्ममेघः समाधिर्जायत इत्यर्थः ।। ४८ ।।

अ. ऋतंभरत्वोपपत्तिमाह—

(सू) श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ।। ४९ ।।

टि. [आगमानुमानाभ्यामेव प्रमाणाभ्यां अर्थतत्वं गृह्यताम् अलं तदुत्तरं योगेनेत्याशङ्कायां उच्यते - श्रुतेति, शब्दानुमाने हि सामान्यमात्रविषयके, तद्विषयातिरिक्तविषया च योगजप्रज्ञा, विशेषविषयवत्वात्]

यो - सूक्ष्मव्यवहितविप्रकृष्टवस्तुषु योगिप्रत्यक्षं निर्वर्तते । आगमानुमानाभ्यां तानि वस्तूनि ज्ञायन्ते । ते च श्रुतानुमानजन्ये प्रज्ञे सामान्यमेव गोचरयतः । इदं तु योगिप्रत्यक्षं बिशेषगोचरत्वात् ऋतंभरमित्यर्थः ।। ४९ ।।

अ. तस्याः प्रज्ञाया असंप्रज्ञातसमाधौ बहिरङ्गत्वसिद्ध्यर्थमुपकारित्वम् आह—

(सू) तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ।। ५० ।।

यो - तस्याः प्रज्ञाया अभ्यासजन्यो यः संस्कारः, स चान्यान्व्युत्थानसंस्कारान्प्रतिबध्नाति बाधत इति तत्प्रतिबन्धीत्यर्थः ।। ५० ।।

अ. इत्थम् असंप्रज्ञातसमाधेर्बहिरङ्गसाधनमभिधाय निरोधप्रयत्नस्य अन्तरङ्गसाधनतां सूचयन्निर्बीजम् उपसंहरति—

(सू) तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ।। ५१ ।।

टि. [पञ्चाशत्तमेन सूत्रेण संप्रज्ञातसमाधिजन्यविशेषमुपदिश्य अनेन एकपञ्चाशत्तमेन असंप्रज्ञातसमाधिजन्यफलविशेषम् उपदिशति]

यो - परवैराग्यसहकृतविरामप्रत्ययेन प्रज्ञासंस्कारस्यापि निरोधे सत्युत्पत्स्यमानप्रज्ञासंस्कारस्य सर्वस्यापि निरोधादशेषबन्धनिवृत्तेर्निर्बीजः समाधिर्लभ्यते । तस्मिन्समाधौ लब्धे सति पुनर्व्युत्थातुमशक्तं सत्चित्तं नश्यति । ततः कूटस्थनित्यानन्ता शुद्धा चितिशक्तिः स्वे महिम्नि निरन्तरं निर्विघ्नमवतिष्ठत इत्यतिशोभनम् ।। ५१ ।।

इति श्रीमत्पतञ्जलिप्रणीते योगशास्त्रे
योगसुधाकराभिधायां वृत्तौ
समाधिपादः
समाप्तः ।।



द्वितीयः

# साधनपादः ॥

——:x:——

परापश्यन्त्यादिभेदभिन्नामेकां निसर्गतः ।
चिदानन्दमयीं नित्यां वाचं कांचिदुपास्महे ॥

अ. पूर्वं सावान्तरभेदं सान्तरङ्गसाधनं सफलं समाधिमभिधाय अधुना पूर्वाभिहितसाधनेऽप्रवर्तमानमानसमपक्वकषायकरणं प्रति बहिरङ्गसाधनं क्रियायोगमाह—

**(सू) तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ।१॥**

टि. [पूर्वस्मिन् पादे चित्तवृत्तिनिरोधरूप योग उक्तः । तस्य योगस्य अस्मिन् पादे साधनान्युच्यन्ते इत्यनयोः पादयोः सम्बन्धः । समाहितचित्तस्य योगमभिधाय व्युत्थितचित्तस्य योगः कथं सिद्धयति? इति तत्साधनप्रतिपादनाय क्रियायोगमाह ।]

यो - हितमितमेध्याशनं तपः । परमपवित्रप्रणवादिमन्त्रजपः स्वाध्यायः । ईश्वरे लीलया स्वीकृतातिमनोहराङ्गे परमगुरौ कायवाङ्मनोभिर्निर्वर्तितो भक्तिविशेषः प्रणिधानम् । तानि प्रियारूपत्वाद्योगसाधनत्वाच्च क्रियायोग इति शुद्धसारूप्यलक्षणाश्रयणेन निरूप्यन्ते 'आयुर्घृतम्' इतिवदित्यर्थः ॥ १ ॥

अ. स किमर्थ इत्यत आह—

**(सू) समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥**

टि. [निबिडेषु क्लेशेषु सत्सु समाधिः न सिध्यति । तस्मात् क्रियायोगः क्लेशान् तनूकृत्य समाधिं निष्पादयति]

यो - समाधेर्भावनं निष्पादनम्अर्थः प्रयोजनं यस्य स तथोक्तः, क्लेशानां तनूकरणं शिथिलीकरणम्अर्थः प्रयोजनं यस्य स तथोक्तः । एतदुक्तं भवति — दीर्घकालनैरन्तर्यसत्कारानुबन्धितपआदिक्रियायोगाङ्गानुष्ठानेन क्लेशा विशरारुतामिताः सन्तः पुरुषान्यताख्यातावनुपप्लवायां समूलकाषं कषिता भवन्तीति ।। २ ।।

अ. के ते क्लेशाः कियन्त इत्यपेक्षायामाह—

**(सू) अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः ।। ३ ।।**

टि. [क्लिश्यन्ति - कर्मतत्फलप्रवर्तकास्सन्तः पुरुषं दुःखाकुर्वन्ति, इति क्लेशाः ।]

यो - पुरुषं क्लेशयन्ति दुःखाकुर्वन्तीति क्लेशाः । ते पञ्चेत्यर्थः ।। ३ ।।

अ. अथास्मितादीनामविद्यानिदानत्वमाह—

**(सू) अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ।। ४ ।।**

टि. [सत्यपि सर्वेषां तुल्ये क्लेशत्वे मूलभूतत्वात् अविद्यायाः प्राधान्यं प्रतिपादयति ।]

यो - प्रसुप्तास्तनवो विच्छिन्ना उदाराश्चास्मितादयश्चत्वारः । तेषामुत्तरेषामविद्या भावरूपो विपर्ययः, सा क्षेत्रं प्रसवभूमिः । तत्र प्रसुप्तत्वं प्रबोधसहकारस्याभावेनानभिव्यक्तिः । तनुत्वं प्रतिपक्षभावनया शिथिलीकरणम् । विच्छिन्नत्वं बलवता क्लेशेनाभिभवः । उदारत्वं सहकारिसंनिधिवशात्कार्यकारित्वमित्यर्थः ।। ४ ।।

अ. अथ अविद्यास्वरूपम् आह—

**(सू) अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिः अविद्या ।।५।।**

यो - अतस्मिंस्तद्बुद्धिर्विपर्यय इत्युक्तं भवति । तद्यथा—अनित्ये स्वर्गादौ नित्यत्वाभिमानः । अशुचौ मांसासृक्पूयविण्मूत्रादिशालिनि काये शुचित्वप्रत्ययः । दुःखे स्रक्चन्दनवनितादौ सुखत्वारोपः । अनात्मनि देहादावात्मबुद्धिः इत्यविद्या चतुष्पदेत्यर्थः ।। ५ ।।

अ. अविद्यामूलास्मितामाह—

**(सू) दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ।। ६ ।।**

टि. [दृक्शक्तिः पुरुषः, दर्शनशक्तिः अन्तःकरणस्य सात्त्विकः परिणामः तयोः भोक्तृभोग्यत्वेन भिन्नत्वेऽपि एकताभिमानः अस्मिता]

(सू) सत्त्वपुरुषयोरहमस्मीत्येकताभिमानोऽस्मितेत्यर्थः ।। ६ ।।

अ. रागं निरूपयति—

**(सू) सुखानुशयी रागः ।। ७ ।।**

यो - सुखाभिज्ञस्य सुखानुस्मृतिपूर्वकं सुखसाधनेषु तृष्णारूपो राग इत्यर्थः ।। ७ ।।

**(सू) दुःखानुशयी द्वेषः ।। ८ ।।**

यो - दुःखाभिज्ञस्य तदनुस्मृतिपुरःसरं तत्साधनेषु निन्दा द्वेष इत्यर्थः ।। ८ ।।

**(सू) स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः ।। ९ ।।**

टि. [स्वस्य रसेन संस्कारणैव वहतीति स्वरसवाही । पूर्वजन्मानुभूतवासनाबलाज्जायमानः मरणदुःखानुभवः "शरीरादिभिः मम वियोगो माभूत्" इति सर्वेषाम् अभिनिवेशः]

यो - स्वरसतः प्रवाहशीलो विदुषोऽपि तथा मूढवदारूढो भयत्रासोऽभिनिवेशः । पूर्वजन्मानुभूतमरणदुःखानुभववासनाबलात् सर्वस्य प्राणभृन्मात्रस्य आ क्रिमेः आ च विदुषः संजायमानः शरीरविषयादेर्मम वियोगो मा भूदिति प्रत्यहं निमित्तमन्तरेण प्रवर्तमानो भयरूपोऽभिनिवेश इति ।। ९ ।।

अ. पूर्वं कर्मयोगम् अभिधाय तेन विरसाः क्लेशास्तत्समनन्तरभाविपुरुषख्यात्या दग्धा भवन्ति इत्यर्थादभिहितम् । तत्र सूक्ष्माणां दग्धानाम् अधुना समूलोन्मूलनोपायमाह—

(सू) ते प्रतिप्रसवहेयाः सूक्ष्माः ।। १० ।।

यो - चित्तस्य निवृत्ताधिकारस्य प्रकृतौ प्रलयः प्रतिप्रसवः । तेन हेयाः सूक्ष्माः क्लेशाः । स्वमूलभूतचित्तहानौ तत्संस्काररूपाः सूक्ष्माः समूलघातं हता भवन्तीत्यर्थः ।। १० ।।

अ. अथ स्थूलानां समूलं कषणोपायमाह—

(सू) ध्यानहेयास्तद्वृत्तयः ।। ११ ।।

यो - क्रियायोगेण शिथिलाः स्थूलास्ताः क्लेशवृत्तयः पुरुषध्यानेनैव हातव्याः । हीनाश्च स्वमूलचित्तोन्मूलनेनोन्मूलिता भवन्तीत्युक्तम् ।। ११ ।।

अ. इत्थं क्लेशांस्तद्धानोपायं च अभिधाय अधुना कर्माशयस्य क्लेशनिदानत्वमुपदर्शयन्नाह—

(सू) क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ।। १२ ।।

टि. [कर्माशयः - आशेरते सांसारिकाः पुरुषाः अस्मिन्नित्याशयः, कर्मणां धर्माधर्मरूपः संस्कारः । क्लेशाः - कामक्रोधादयः मूलं अस्येति क्लेशमूलः ।]

यो- रागद्वेषादिक्लेशनिदानः कर्मणां धर्माधर्मरूपः संस्कारः कर्माशयः । स च दृष्टजन्मवेदनीय इहैवानुभाव्यः, अदृष्टजन्मवेदनीयश्चामुत्रानु-

भाव्यः । तत्राद्यो यथा नन्दिकेश्वरस्तीव्रतपश्चर्यादिसाधनेन ईश्वरं समाराध्य सद्य एव देवत्वादिकमलभत, नहुषो महर्ष्यपराधेन सद्यः सर्पत्वमगमत् । द्वितीयस्तु स्वर्गनरकादिहेतुरित्यर्थः ।। १२ ।।

अ. न केवलं क्लेशमूलत्वं कर्माशयस्यैव, किं तु तद्विपाकस्यापीत्याह—

**(सू) सति मूले तद्विपाको जात्यायुर्भोगाः ।। १३ ।।**

यो - क्लेशरूपे मूले सत्येव कर्मणां विपाकः फलम् । स च त्रिविधः— जातिर्जन्म देवत्वादिर्वा । आयुश्चिरकालं देहप्राणयोर्योगः । इन्द्रियैर्विषयानुभवो भोग इति । तत्र भोगो मुख्यः, जात्यायुषी तच्छेषभूते इति विभागः । सूत्रद्वयस्यायमभिसंध्यर्थः— सत्सु क्लेशेषु कर्मतत्फले भवतः; विवेकख्यात्यग्निदग्धेषु कर्मालब्धात्मकं सत् वितुषशाल्यादिवन्न फलं प्रसूत इति ।। १३ ।।

अ. अधुना जात्यादीनां हेयत्वार्थे फलमाह—

**(सू) ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ।। १४ ।।**

यो - ते जात्यायुर्भोगाः पुण्यहेतुकाः सुखफलाः, अपुण्यहेतुका दुःखफला भवन्ति विभागेन अविवेकिनामित्यर्थः ।। १४ ।।

अ. विवेकिनां तु ते सर्वे दुःखफला एवेत्याह—

**(सू) परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ।। १५ ।।**

यो - परिणामदुःखं तापदुःखं संस्कारदुःखम्, तैरित्यर्थः । तत्र सुखे सति आगामिनस्तादृशस्य सुखस्य कारणं पुण्यमननुष्ठाय बृथैव तदपेक्षा तामसी वृत्तिर्जायमाना चित्तं दुःखाकरोतीति परिणामदुःखम् । सुखभोगकाले रोगादिनिमित्तेन रजोगुणविकाररूपा संतापात्मिका प्रतिकूला वृत्तिर्जायते; सा च 'अहं पापी, धिङ्मां दुरात्मानम्' इत्येवं

चित्तं संतापयति; तदिदं तापदुःखम् । तथा सुखनाशे तत्संस्कारः सुखं स्मारयित्वा स्मारयित्वा हृदयं दहति; तदिदं संस्कारदुःखम् । एतैर्दुःखैर्योगात्, किं च गुणवृत्तिविरोधाच्च गुणानां सत्त्वरजस्तमसां या वृत्तयः प्रकाशप्रवृत्तिमोहात्मिकाःतासामतिचपलकल्लोलवन्निरन्तरं परिणतानां विरोधः परस्परं बाध्यबाधकत्वं तस्माच्च सर्वमेव भोगसाधनं जगद्विवेकिनो दुःखमेव, विवेकिनमक्षिपात्रम् ऊर्णातन्तुरिवात्यन्तमुद्वेजयति। अतः सर्वं दुःखं हेयमिति भावः ।। १५ ।।

अ. अधुना अनागतदुःखस्य विशिष्य हेयत्वमाह—

(सू) हेयं दुःखमनागतम् ।। १६ ।।

यो - अतीतस्य गतत्वाद्वर्तमानस्य भोगेनैव क्षयात् अनागतमेव दुःखं हेयमित्यर्थः ।। १३ ।।

अ. अथ हेयहेतुमाह—

(सू) द्रष्टृदृश्ययोः संयोगो हेयहेतुः ।।१७ ।।

यो - द्रष्टा दृग्रूपः पुरुषः, दृश्यम् बुद्धिसत्त्वम्, तयोः संयोगः स्वस्वामिभावः; स चेन्द्रियप्रणाडिकया चित्ते विविधशब्दाद्याकारेण परिणते सति तत्र चितिच्छायायां प्रतिबिम्बतायां तदविवेकरूपाविद्याकृतः । स च हेयस्य दुःखस्य हेतुरित्यर्थः ।। १७ ।।

अ. दृश्यं प्रपञ्चयति—

(सू)प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ।।१८।।

यो - प्रकाशः प्रख्यारूपः, क्रिया प्रवृत्तिरूपा, स्थितिर्नियमरूपा, ताः सत्त्वरजस्तमसां धर्माः शीलं स्वाभाविकं रूपं यस्य तत्तथोक्तम्; भूतेन्द्रियात्मकं भूतानि महाभूततन्मात्रभेदभिन्नानि इन्द्रियाणि बुद्धिकर्मेन्द्रियान्तःकरणभेदभिन्नानि एतद्ग्राह्यग्रहणरूपमात्मा स्वाभिन्नः

परिणामो यस्य तत्तथोक्तम्; भोगापवर्गार्थं भोगमोक्षप्रयोजनं तद्दृश्यम् इत्यर्थः ।। १८ ।।

अ. एतस्य गुणत्रयात्मकस्य दृश्यस्य परिणामं विभज्य दर्शयति—

(सू) विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ।। १९ ।।

यो - विशेषा महाभूतेन्द्रियमनोरूपाः षोडश विकाराः, अविशेषाः तन्मात्राहंकाराः षट् प्रकृतिविकृतयः, लयं गच्छतीति लिङ्गमात्रं प्रकृतिबिकाररूपं महत्तत्त्वम्, अलिङ्गं गुणानां साम्यावस्थारूपं प्रधानम्; एतानि चत्वारि गुणानां पर्वाणि अवस्थाविशेषा इत्यर्थः ।। २० ।।

अ. इत्थं हेयं दृश्यं प्रथमं निरूप्य उपादेयं द्रष्टारं निरूपयितुमाह—

(सू) द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ।। २० ।।

यो - द्रष्टा पुरुषो दृशिमात्रश्चिन्मात्रो न ज्ञानादिधर्मकः, तद्धर्मकत्वे तस्य वृत्तिरूपतया विनाशशीलत्वात् 'उपयन्नपयन्धर्मो विकरोति हि धर्मिणम्' इति न्यायेनात्मनः कौटस्थ्यं हीयते । अतः शुद्धः अपरिणाम्यपि प्रत्ययं बौद्धमनुपश्यति । तमनुपश्यन्नतदात्मापि तदात्मभूत इव प्रतिभासत इत्यर्थः ।। २० ।।

अ. इत्थं दृश्यद्रष्टाराबभिधाय तयोः शेषशेषित्वमभिधातुमाह—

(सू) तदर्थ एव दृश्यस्यात्मा ।। २१ ।।

यो - दृश्यस्य भोग्यस्यात्मा स्वरूपं द्रष्ट्रर्थमेव न स्वार्थम्, अचेतनत्वादित्यर्थः ।। २१ ।।

अ. ननु द्रष्टुः प्रयोजने निष्पन्ने सति कृतकृत्यतया प्रधाने निर्व्यापारे अधुना संसारो नोपलभ्येतेति चेत्, नेत्याह—

(सू) कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ।। २२ ।।

यो - प्रधानमेकं पुरुषा अनन्ताः । तथा च पुरुषख्यातिपर्यन्तं भोगापवर्गौ दत्वा कंचन कृतार्थं प्रति नष्टं निर्व्यापारमपि पुरुषान्तर-साधारणत्वादनष्टमेवावतिष्ठते । तथा चैकमुक्तौ सर्वमुक्तिप्रसङ्गानवकाश इति भावः ।। २२ ।।

अ. इत्थं दृश्यद्रष्टारौ व्याख्याय तत्संयोगं व्याख्यातुमाह—

(सू) स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ।। २३ ।।

टि. [द्रष्टृदृश्ययोः संयोग एव संसारस्य कारणम् इत्युक्तम् । तादृश-संयोगस्य स्वरूपम् उपदिश्यते)

यो - स्वशक्तिर्दृश्यस्वभावः, स्वामिशक्तिर्दृक्स्वभावः । तयोश्चैत्त-चेतनत्वेन व्यवस्थितयोः स्वरूपोपलब्धिर्भोगापवर्गरूपा । तस्या हेतुः प्रत्ययः संयोगो द्रष्टृदृश्यभावो विद्याकृत इति व्याख्यातम् । एवं च यस्याभावे दृग्दृश्ययोः स्वरूपोपलब्धिनः भवति, यद्भावे सा भवति, स संयोगः कार्यैकोन्नेय इत्युपदिष्टं भवति ।। २३ ।।

यो - संयोगस्याप्युपायमाह—

(सू) तस्य हेतुरविद्या ।। २४ ।।

यो - तस्य संयोगस्य पूर्वोक्ताविद्या हेतुः कारणमित्यर्थः ।। २४ ।।

अ. इत्थं हेयं तद्धेतुं च अभिधाय अधुना हानं तद्धेतुं च निरूपयितुमाह द्वाभ्याम्—

(सू) तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम् ।। २५ ।।

यो - तस्या अविद्याया अभावाद्विद्यया विनाशात्तत्कृतसंसयोगविनाशो हानं यत्, तदेव दृशेर्नित्यमुक्तायाश्चितिशक्तेः कैवल्यमित्यर्थः ।। २५ ।।

(सू) विवेकख्यातिरविप्लवा हानोपायः ।। २६ ।।

टि.· [मोक्षम् उक्त्वा तद्धेतुः उच्यते । दृग्दृश्ययोः भेदो विवेकः, तस्य ज्ञानं ख्यातिः । विप्लवो मिथ्याज्ञानम् ।]

यो - अविप्लवा अविद्याविरोधिनी सत्त्वपुरुषयोः अन्यताख्यातिर्हानस्य कैवल्यस्य हेतुरित्यर्थः— अयं सूत्रद्वयस्याभिसंध्यर्थः— आदरनैरन्तर्य-दीर्घकालानुबन्धियमनियमाद्यष्टाङ्गानुष्ठानेन सत्त्वपुरुषान्यताख्यातौ अविप्लवायां जातायामविद्यादयः पञ्च क्लेशास्तत्कृतसंयोगश्च समूलकाषं कषिता भवन्ति । कुशलाकुशलकर्माशयास्तद्विपाकाश्च समूलघातं हता भवन्ति । ततश्च परवैराग्येणान्यताख्यातिनिवृत्तौ निरोधसमाध्यभ्यासेन चित्ते निर्वर्तिते सति पुरुषस्य निर्लेपस्य स्वरूपप्रतिष्ठारूपं कैवल्यं भवतीति ।। २६ ।।

अ. अथ जीवन्मुक्तस्य पुरुषस्य ज्ञानवैभवमाह—

(सू) तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ।। २७ ।।

यो - तस्य संजातविवेकख्यातेः पुरुषस्य सप्तधा-सप्तप्रकारा-प्रान्तभूमिः प्रकर्षेणान्तो निवृत्तिः फलत्वेन यासां ता भूमयोऽवस्था यस्याः सा प्रज्ञा प्रान्तभूमिः सप्तप्रकारा । अयमर्थः— संजातविवेकख्यातेः पुरुषस्य सप्त प्रज्ञाभूमयः । तत्र चतस्रः कार्यविमुक्तिसंज्ञाः, तिस्रश्चित्तविमुक्ति-संज्ञाः । तद्यथा— ज्ञातव्यमखिलं ज्ञातं मया न किंचिज्ज्ञातव्यमस्तीति जिज्ञासानिवृत्तिरेका । हातव्यं सर्वं बन्धजातं हीनं मम न किंचिद्धेय-मस्तीति जिहासानिवृत्तिर्द्वितीया । कैवल्यप्राप्त्या प्राप्तव्यमखिलं प्राप्तं ततो न किंचित्प्राप्तव्यमस्तीति प्रेप्सानिवृत्तिस्तृतीया । विवेकख्याति-लाभेन कर्तव्यमखिलं कृतं न किंचिन्मम कार्यमस्तीति चिकीर्षानिवृत्ति-श्चतुर्थी । कृतार्थं मे बुद्धिसत्त्वमिति शोकनिवृत्तिरेका । मम बुद्ध्यादयो गुणाः प्रलीनाः प्रयोजनाभावात्पुनर्न प्ररोहन्तीति भयनिवृत्तिर्द्वितीया । तदाहं गुणातीतस्वरूपमात्रेणावस्थितश्चिदेकरस इति सकलविकल्प-निवृत्तिस्तृतीया । इति सप्तधा प्रान्तभूमिर्द्रष्टव्येति ।। २७ ।।

अ. पूर्वस्मिन्पादे समाहितचित्तस्यान्तरङ्गसाधने अभ्यासवैराग्ये अभिधाय आदावस्मिन्पादे व्युत्थितचित्तस्य क्रियायोगोऽभिहितः । अधुना ततोऽपि व्युत्थितचित्तस्य संप्रज्ञातसाधनान्यष्टाङ्गान्यभिधातुम् आह—

**(सू) योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ।। २८ ।।**

टि. [संप्रज्ञातसाधनान्युपदिशति - योगाङ्गानाम् योगस्य च अनुष्ठानात् अशुद्धेः क्लेशकर्मरूपायाः क्रमेण क्षये जायमाने ज्ञानस्य विशुद्धिः आ निर्विकल्पकविवेक-ख्यातेः भवति इत्यर्थः ।]

यो - वक्ष्यमाणयोगाङ्गानामनुष्ठानादशुद्धेः क्लेशरूपायाः क्रमेण क्षये जायमाने, ज्ञानस्य दीप्तिर्वृद्धिः आविवेकख्यातेर्भवतीत्यर्थः । योगाङ्गा-नुष्ठानं शुद्धिद्वारा प्रज्ञासाधनमिति भावः ।। २८ ।।

अ. कानि पुनस्तानि योगाङ्गानीत्यपेक्षायामाह—

**(सू) यमनियमासनप्राणायामप्रत्याहारधारणाध्यान-समाधयोऽष्टावङ्गानि ।। २९ ।।**

अ. तत्र के यमा इत्यपेक्षायामाह—

**(सू) अहिंसासत्याऽस्तेयब्रह्मचर्याऽपरिग्रहा यमाः ।। ३० ।।**

यो - अहिंसादिभ्यः निषिद्धकर्मभ्यो योगिनं यमयन्ति निवर्तयन्तीति यमाः । तत्राहिंसा कायवाङ्मनोभिः सर्वदा सर्वभूतानामहिंसनम् । सत्यं सर्वदानृतानभिभाषणम् । अस्तेयं परस्वत्वानपहारः । ब्रह्मचर्य-मष्टविधमैथुनत्यागः । अपरिग्रहः शरीरस्थितिमात्रव्यतिरिक्तभोग-साधनास्वीकारः । एते पञ्च यमा इत्यर्थः ।। ३० ।।

अ. एतेषां योगिभिरुपादेयं विशेषम् आह—

**(सु) जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ।। ३१ ।।**

यो - जातिर्ब्राह्मणत्वादिकम्, तत्सदाहं न हनिष्यामीत्यहिंसा जात्या परिच्छिन्ना । देशे तीर्थादौ काले नियतचतुर्दश्यादौ वा कमपि न हनिष्यामीति देशकालाभ्यामवच्छिन्ना । देवब्राह्मणाद्यर्थातिरेकेण न हनिष्यामीति समयावच्छिन्ना । समयो नियतोऽवसर इत्यर्थः । प्राणिमात्रं क्वचिदपि कदाचिदपि कस्यापि कृतेऽहं न हनिष्यामीति जात्यादिभिश्चतुर्भिरनवच्छिन्ना भवत्यहिंसा पुष्कला । एवं सत्यादयोऽप्यनवच्छिन्ना ऊहनीयाः । इत्थमेते सर्वासु जात्यादिषु भूमिषु विदिताः सार्वभौमा महाव्रतमित्युच्यन्त इत्यर्थः ।

अ. अथ नियमानाह—

**(सू) शौचसंतोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमाः ।। ३२ ।।**

यो - जन्महेतून्काम्यधर्मान्निवर्त्य मोक्षहेतौ निष्कामे धर्मे नियमयन्ति प्रेरयन्तीति नियमाः । शौचं मृज्जलाभ्यां बाह्यमलनिवृत्तिः, मैत्र्यादिभावनयान्तरसूयादिमलनिवृत्तिः । संतोषो यथालाभपरितुष्टिः । तपः कायशोषणम्, तदुक्तं योगयाज्ञवल्क्ये— 'विधिनोक्तेन मार्गेण कृच्छ्रचान्द्रायणादिभिः । शरीरशोषणं प्राहुस्तापसास्तप उत्तमम्' इति । स्वाध्यायो गायत्रीप्रभृतीनां मन्त्राणामध्ययनम् । ते च मन्त्रा द्विविधा वैदिकास्तान्त्रिकाश्च । वैदिकाः प्रगीताप्रगीतभेदेन द्विविधाः । तान्त्रिकाः स्त्रीपुंनपुंसकभेदेन त्रिविधाः । तदलं मन्त्ररहस्योद्घोषेण । ईश्वरप्रणिधानं नाम अभिहितानामनभिहितानां च सर्वासां क्रियाणां परमेश्वरे फलानपेक्षतया समर्पणम् । तदुक्तम्— 'कामतोऽकामतो वापि यत्करोमि शुभाशुभम् । तत्सर्वं त्वयि विन्यस्य त्वत्प्रयुक्तः करोम्यहम्' इति । फलाभिसंधेरुपघातकत्वमभिहितं महद्भिः— 'अपि प्रयत्नसंपन्नं कामेनोपहतं तपः । न तुष्टये महेशस्य श्वलीढमिव पायसम्' इति । एतानि शौचादीनि पञ्च नियमा इत्यर्थः ।। ३२ ।।

अ. ननु सति परिपन्थिनि जाग्रति, कथं यमादिसिद्धिः इत्यत आह—

**(सू) वितर्कबाधने प्रतिपक्षभावनम्** ।। ३३ ।।

टि. [वितर्कैः हिंसादिभिः बाधने प्राप्ते सति, इत्यन्वयः]

यो - एतेषां यमनियमादीनां वितर्कैर्हिंसादिसंकल्पैः 'हनिष्याम्येनम्', 'अनृतं वदिष्यामि' 'परस्वमादास्ये' इत्यादिभिर्बाधने प्राप्ते सति' यमादिपरो योगी 'संसाराङ्गारेषु अहं तप्यमानो यमादिकं शरणमुपगतो हिंसादिकमत्यजम्; पुनस्तदाददानः कौलेयकेन वान्ताशिना समः' इत्यनेन प्रकारेण वितर्कप्रतिपक्षान् भावयेत् इत्यर्थः ।। ३३ ।।

अ. अधुना वितर्काणां स्वरूपप्रकारकारणावान्तरभेदफलानि पञ्चभिः पदैः क्रमेण कथयन् प्रतिपक्षभावनं स्फुटयति—

**(सू) वितर्का हिंसादयः कृतकारितानुमोदिता**
**लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा**
**दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम्** ।। ३४ ।।

यो - वितर्का हिंसादय इति स्वरूपनिर्देशः । तत्र हिंसा त्रिप्रकारा— स्वयं कृता, कुर्विति कारिता, साधु साध्वित्यनुमोदिता चेति । तत्रैकैका कारणभेदात्पुनस्त्रिविधा भवति — धनादिलोभेन, अपकृतमनेनेति क्रोधेन, धर्मो भविष्यतीति मोहेन । एवं नवविधा जाता हिंसा । लोभक्रोधमोहाः प्रत्येकं त्रिविधा भवन्ति मृदुमध्याधिमात्रत्वेन । तत्पूर्वका हिंसादयोऽपि मृदुत्वादिना त्रिविधा भवन्ति । तथा कृता कारितानुमोदिता च प्रत्येकं नवधा भवतीति हिंसायाः सप्तविंशतिर्भेदा भवन्ति । मृदुमध्याधिमात्रा अपि प्रत्येकं त्रिविधा भवन्ति—मृदुमृदुर्मध्य-मृदुःतीव्रमृदुः, मृदुमध्यो मध्यमध्यःतीव्रमध्यः, मृदुतीव्रो मध्यतीव्र-स्तीव्रतीव्र इति। एवं लोभो नवविधः। तथा क्रोधमोहाविति तत्पूर्वा कृता हिंसा सप्तविंशतिभेदा भवति । तथा कारितानुमोदिता चेत्येकाशीति-भेदा हिंसा भवति । एवमनृतादिष्वपि योज्यम् । इत्थंभूता वितर्का

दुःखं नरकादिकम्, अज्ञानं स्थावरादिभावम्, भ्रान्तिसंशयरूपं च अनन्तं फलं प्रयच्छन्तीति प्रतिपक्षाणां वितर्कशत्रूणां भावनमित्यर्थः। अनेन भावनेन तद्धाने सति निर्विघ्ना यमादयः सिध्यन्ति। तत्सिद्धौ चित्तपरिकर्मद्वारा कैवल्यं सिध्यतीत्यभिसंधिः ॥

अ. अधुना यमादीनां सिद्धिसूचकमवान्तरफलं क्रमेण दर्शयति—

**(सू) अहिंसाप्रतिष्ठायां तत्संनिधौ वैरत्यागः ॥ ३५ ॥**

यो - सति अहिंसास्थैर्ये, तस्याहिंसकस्य योगिधौरेयस्य सनिधौ स्वभावविरुद्धानां गोव्याघ्रादीनामपि वैरत्यागो भवतीत्यर्थः। एतदेवाभिप्रेत्योक्तं वासिष्ठे— 'मातरीव परं यान्ति विषमाणि मृदूनि च। विश्वासमिह भूतानि सर्वाणि शमशालिनि' इति ॥ ३५ ॥

**(सू) सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥ ३६ ॥**

यो - क्रिया धर्माधर्मरूपा, तस्याः फलं स्वर्गादिकम्; तयोराश्रयो वाङ्मात्रेण दाता, तस्य भावस्तत्त्वम्। योगिनः स्वर्गादिफलदातृत्वं वाङ्मात्रेण सिध्यतीत्यर्थः ॥ ३६ ॥

**(सू) अस्तेयप्रतिष्ठायां रत्नोपस्थानम् ॥ ३७ ॥**

यो - दिव्यानि रत्नानि योगिनः पुरत उपस्थितानि भवन्ति इत्यर्थः ॥ ३७ ॥

**(सू) ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ॥ ३८ ॥**

यो - वीर्यनिरोधो हि ब्रह्मचर्यम्। तत्सिद्धौ निरतिशयं सामर्थ्यं भवति। निरतिशयसामर्थ्यशालिना योगिना कृतः शिष्येषूपदेशः सद्यः फलतीति भावः ॥ ३८ ॥

(सू) अपरिग्रहस्थैर्ये जन्मकथंतासंबोधः ।। ३९ ।।

यो - कथमित्यस्य भावः कथंता, जन्मनि कथंता तस्याः संबोधः साक्षात्कारः, पूर्वजन्मनि कोऽहं कीदृशोऽतिष्ठं किं कार्यमकरवमिति जिज्ञासायां सर्वमनेन योगिना सम्यग्ज्ञायत इत्यर्थः ।। ३९ ।।

अ. इत्थं यमसिद्धीरभिधाय अधुना नियमसिद्धीः क्रमेण अभिदधाति—

(सू) शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः ।। ४० ।।

यो - शौचमाचरतो योगिनः स्वाङ्गे शुद्धिमपश्यतो जुगुप्सा भवति । अशुचिस्वभावोऽयं कायः । अतः तस्मिन्नवभिश्छिद्रैर्निरन्तरं स्रवत्सु मलेषु रोमकूपैरसंख्यातैः स्विन्ने गात्रे को नामाखेदेन प्रक्षालयितुं शक्नुयात् ? तदुक्तम्— 'नवच्छिद्रकृता देहाः स्रवन्ति घटिका इव । बाह्यशौचैःन शुध्यन्ति नान्तः शौचं तु विद्यते' इति । एवं स्वकाये जुगुप्सावतः परकाया एतादृशा इति दोषदर्शिनःतैः संसर्गो न कदाचिदपि भवति । यदि स्वकायदुर्गन्धेन जुगुप्सा न स्यात्किं नामैतस्य निर्वेदकारणं भवेत् ? तदुक्तम्— 'स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् । विरागकारणं तस्य किमन्यदुपदिश्यते' इति ।। ४० ।।

अ. संप्रति अन्तःशौचसिद्धिम् अह—

(सू) सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्म-
दर्शनयोग्यत्वानि च ।। ४० ।।

टि. [बहिः शौंचस्थैर्यसिद्धिम् उक्त्वा अन्तःशौचसिद्धिम् उपदिशति ।]

यो - सत्त्वस्य बुद्धेरसूयेर्ष्यादिमलनिवृत्तिः शुद्धिः, ततः सौमनस्यं सत्त्वोत्कर्षः, तत ऐकाग्र्यं नैश्चल्यम्, ततो बाह्येन्द्रियजयः, तत आत्मदर्शनयोग्यत्वं पुरुषसाक्षात्कारार्हत्वम्, तान्येतानि परस्परहेतुहेतुमद्भावेन शौचाद्भवन्तीत्यर्थः ।। ४१ ।।

(सू) संतोषादनुत्तमसुखलाभः ॥ ४२ ॥

टि. [यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्]

यो - संतुष्टस्य योगिनः सत्त्वोत्कर्षादन्तर्निरतिशयं सुखमाविर्भवति । न केवलमेवम्; प्रत्युत वैषयिकं सुखं विषमिव प्रतिकूलं भवतीत्यर्थः । तदुक्तम्— 'संतोषामृतपानेन ये शान्तास्तृप्तिमागताः । भोगश्रीरतुला तेषां एषा प्रतिविषायते' इति ॥ ४२ ॥

(सू) कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥

यो - स्वधर्मकृच्छ्रादिना क्लेशपापक्षयात्कायस्य अणिमादिसिद्धिः, इन्द्रियाणां च सूक्ष्मव्यवहितप्रकृष्टार्थग्राहित्वसिद्धिर्भवतीत्यर्थः ॥ ४४ ॥

(सू) स्वाध्यायदिष्टदेवतासंप्रयोगः ॥ ४३ ॥

टि. [प्रणवादिमन्त्रजपात् मोक्षशास्त्राध्ययनाद्वा स्वेष्टदेवतायाः संभाषणादिकं सिध्यति]

यो - अभिमतमन्त्रजपादभिमतदेवतायाः संभाषणादिकं सिध्यति इत्यर्थः ॥ ४४ ॥

(सू) समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥

यो - ईश्वरे अकामनया सकलकर्मसमर्पणात्समाधिसिद्धिः । समाधिश्चित्तस्य समाधानं प्रसाद इति यावत् ॥ ४५ ॥

अ. इत्थं सावान्तरफलान् यमनियमान्निरूप्य क्रमप्राप्तमासनं तत्साधनं तत्फलं च तावत् आह—

(सू) स्थिरसुखमासनम् ॥ ४६ ॥

टि. [निश्चलं सुखावहं च यदासनं तत् योगाङ्गम् । आस्यते अनेनेत्यासनम् । तत् द्विविधं बाह्यं, शारीरं च । तत्र चैलाजिनकुशोत्तरं बाह्यम्, शारीरं पद्मस्वस्तिकादि इति भेदः ।]

यो - पद्मस्वस्तिकादिना यादृशेन देहस्थापनेन यस्य पुरुषस्य अवयवव्यवथानुत्पत्तिलक्षणं सुखं देहचलनराहित्यलक्षणं स्थैर्यं च संपद्यते, तदेव मुख्यमासनम् । पद्मासनादिस्वरूपं तु याज्ञवल्क्येन निरूपितम्—
'ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतले शुभे । अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु । पद्मासनं भवेदेतत्सर्वेषामभिपूजितम्'
इत्यादिना ।। ४६ ।।

**(सू) प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ।। ४७ ।।**

यो - तस्य च प्रयत्नशैथिल्यं लौकिक उपायः । गमनगृहकृत्यतीर्थस्नानादिविषयो यः प्रयत्नो मानस उत्साहः तस्य शैथिल्यम् । अन्यथा उत्साहो बलाद्देहमुत्थाप्य यत्र क्वापि प्रेरयति । फणसहस्रेण धरणीं धारयित्वा स्थैर्येणावस्थितो योऽयमनन्तः स एवाहमस्मीति ध्यानं चित्तस्यानन्ते समापत्तिः । तया यथोक्तासनसंपादकमदृष्टं निष्पद्यते । अतस्ताभ्यामासनं सिध्यतीत्यर्थः ।। ४७ ।।

**(सू) ततो द्वन्द्वानभिघातः ।। ४८ ।।**

यो - सिद्धे च आसने शीतोष्णसुखदुःखमानावमानादिद्वन्द्वैर्यथापूर्वं नाभिहन्यत इत्यर्थः ।। ४८ ।।

अ. अथ आसनानन्तरभाविनं प्राणायाममाह—

**(सू) तस्मिन्सति श्वासप्रश्वासयोःगतिविच्छेदः प्राणायामः ।। ४९ ।।**

यो - तस्मिन्नासनस्थैर्ये सति प्राणायामः प्रतिष्ठितो भवति । स च श्वासप्रश्वासयोर्गतिविच्छेदरूपः । तत्र श्वासो नाम बाह्यस्य वायोरन्त-

रानयनम् । प्रश्वासः पुनः कौष्ठस्य वायोर्निःसरणम् । तयोरुभयोरपि संचरणाभाव प्राणायामः । ननु नेदं प्राणायामसामान्यलक्षणम्, तद्विशेषेषु रेचकपूरककुम्भकप्रकारेषु तदनुगतेरयोगादिति चेत्, नैष दोषः; सर्वत्रापि श्वासप्रश्वासयोर्गतिविच्छेदसंभवात् । तथा हि— कौष्ठ्यस्य वायोर्निर्गमनं रेचकः, यः प्रश्वासरूपः । बाह्यस्य वायोः अन्तर्धारणं पूरकः, यः श्वासरूपः । अन्तःस्तम्भवृत्तिः कुम्भकः, यस्मिञ्जलमिव कुम्भे निश्चलतया प्राणाख्यो वायुरवस्थाप्यते । तत्र सर्वत्र श्वासप्रश्वासयोर्गतिविच्छेदोऽस्त्येवेति नास्ति शङ्कावकाशः । ननु कुम्भके गत्यभावेऽपि रेचकपूरकयोरुछ्वासनिश्वासगती विद्येते इति चेत्, नैष दोषः; अधिकमात्राभ्यासेन स्वभावसिद्धायाः समप्राणगतेर्विच्छेद-संभवात् ॥ ४९ ॥

अ. तमेवाभ्यासमाह—

**(सू) बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः**
**परिदृष्टो दीर्घसूक्ष्मः ॥ ५० ॥**

टि. [प्राणायामस्यावान्तरभेदान् प्रदर्शयति]

यो - रेचको बाह्यवृत्तिः, पूरक आभ्यन्तरवृत्तिः, कुम्भकः स्तम्भ-वृत्तिः । तत्रैकैको देशादिभिः परीक्षणीयः । तद्यथा— स्वभावसिद्धे रेचके हृदयान्निर्गत्य नासाग्रसंमुखे द्वादशाङ्गुलपर्यन्तं श्वासः समाप्यते । अभ्यासेन तु क्रमेण नाभेराधाराद्वा निर्गत्य चतुर्विंशत्यङ्गुलपर्यन्ते षट्त्रिंशदङ्गुलपर्यन्ते वा समाप्यते । तत्र च रेचकप्रयत्नातिशये सति नाभ्यादिप्रदेशक्षोभेण तन्निश्चेतुं शक्यम् । बहिस्तु सूक्ष्मं तूलं धृत्वा तच्चालनेन निश्चेतव्यम् । सेयं देशपरीक्षा । रेचककाले प्राणस्यावृत्तयो दश विंशतिस्त्रिशदित्यादिभिः कालपरीक्षा । अस्मिन्मासे प्रतिदिनं दश रेचका आगामिमासे विंशतिरुत्तरमासे त्रिंशदित्यादिभिः संख्यापरीक्षा । एवं पूरकेऽपि योजनीयम् । यद्यपि कुम्भके देशव्याप्तिविशेषो नाव-गम्यते, तथापि कालसंख्याव्याप्तिरवगम्यत एव । यथा घनीभूत-स्तूलपिण्डः प्रसार्यमाणो दीर्घो विरलतया सूक्ष्मश्च भवति, तथा प्राणोऽपि

देशकालसंख्याभिरभ्यस्यमानो दीर्घो दुर्लक्षतया सूक्ष्मश्च संपद्यत इत्यर्थः ।। ५० ।।

अ. अथ रेचकादिभ्यस्त्रिभ्योऽन्यं प्रकारमाह—

**(सू) बाह्याभ्यन्तरविषयानपेक्षी चतुर्थः ।। ५१ ।।**

टि. [पूर्वसूत्रेण रेचक-पूरक-कुम्भकरूपस्य त्रिविधस्य प्राणायामस्य लक्षण-मुक्त्वा इदानीं तुरीयं प्राणायामम् उपदिशति]

यो - यथाशक्ति वायुं विरेच्यानन्तरं क्रियमाणो बहिःकुम्भकः । यथाशक्ति वायुमापूर्यानन्तरं क्रियमाणोऽन्तःकुम्भकः । रेचकपूरका-वनादृत्य केवलकुम्भकोऽभ्यस्यमानः पूर्वत्रयापेक्षया चतुर्थो भवति । निद्रातन्द्रादिदोषयुक्तानां रेचकादित्रयम्, तद्रहितानां चतुर्थ इति विवेकः ।। ५१ ।।

अ. अथ प्राणायामफलमाह—

**(सू) ततः क्षीयते प्रकाशावरणम् ।। ५२ ।।**

टि. [प्राणायामेन समाधिसिद्धिरूपोत्तमफलसद्भावेऽपि अवान्तरफलस्यापि सद्भावः उपदिश्यते]

यौ - प्रकाशस्य सत्त्वस्यावरणं तमो निद्रालस्यादिहेतुः, तस्य क्षयो भवतीत्यर्थः ।। ५२ ।।

अ. फलान्तरमाह—

**(सू) धारणायोग्यता मनसः ।। ५३ ।।**

यो - आधारनाभिचक्रहृदयभ्रूमध्यब्रह्मरन्ध्रादिदेशविशेषे चित्तस्या-वस्थानं धारणा । तत्र प्राणायामेन रजोगुणकार्याच्चाञ्चल्यात् तमोगुण-कार्यादालस्यादेश्च निवारितं मनो योग्यं भवतीत्यर्थः ।। ५३ ।।

अ. अथ क्रमप्राप्तं प्रत्याहारमाह—

**(सू) स्वस्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ।। ५४ ।।**

यो - शब्दस्पर्शरूपरसगन्धादिविषयेभ्यो निर्वर्तिताः श्रोत्रादयश्चित्त-स्वरूपमनुकुर्वन्तीव अवतिष्ठन्त इत्यर्थः ।। ५४ ।

अ. प्रत्याहारफलमाह—

**(सू) ततः परमा वश्यतेन्द्रियाणाम् ।। ५५ ।।**

यो - इन्द्रियाणाम् अतिचञ्चलानां परमा वश्यता निश्चलता, विषयेष्वत्यन्तमप्रसर इति यावत् ।। ५५ ।।

इति श्रीमत्पतञ्जलिप्रणीते योगशास्त्रे
योगसुधाकराभिधायां वृत्तौ
द्वितीयः
**साधनपादः**
**समाप्तः ।।**



## तृतीयः

# विभूतिपादः ॥

——:x:——

यदाराधनतः सिद्धाः सिद्धीरष्टाववाप्नुवन् ।
तमपायतमोभानुमुमापतिमुपास्महे ॥

अ. इत्थं पूर्वस्मिन्पादे समाधिपरिपन्थिक्लेशतनूकरणार्थं समाधिभावनार्थं च पृथक्क्रियायोगं क्लेशतन्मूलकर्मतद्विपाकतत्फलजात्यादीनां दुःखत्वेन हेयत्वं हेयहेतुं तद्धानं कैवल्यं तदुपायभूतां पुरुषख्यातिं तत्साधनं यमादिपञ्चकं बहिरङ्गं च अभिधाय, अथ अधुना धारणादित्रयमन्तरङ्गं संयमपदवाच्यं तदवान्तरफलविभूतिजातं च आचक्षाणः प्रथमं धारणां लक्षयति—

**(सू) देशबन्धश्चित्तस्य धारणा ॥ १ ॥**

टि. [यम - नियम - आसन - प्राणायाम प्रत्याहारादीनि योगस्य बहिरङ्गानि प्रपञ्चितानि ; इतःपरम् योगस्य अन्तरङ्गसाधनानि धारणा - ध्यान - समाधिरूपाणि क्रमेण उपदिश्यते । नाभिचक्रहृदयनासाग्रादौ देशे संप्रज्ञातयोगसिद्धये चित्तस्य स्थिरीकरणं 'धारणा' इत्युच्यते ।

यो - आधारादिदेशा अधस्तादभिहिताः । तत्र आत्मनि वा चित्तस्य बन्धः स्थापनं धारणेत्युच्यते । तदुक्तं योगयाज्ञवल्क्ये — 'यमादिगुणयुक्तस्य मनसः स्थितिरात्मनि । धारणेत्युच्यते सद्भिर्योगशास्त्रविशारदैः' इति ॥ १ ॥

अ. तत्साध्यं ध्यानं लक्षयति—

(सू) तत्र प्रत्ययैकतानता ध्यानम् ।। २ ।।

यौ - तत्र यथोक्तदेशे प्रत्ययस्यैकतानता एकविषयप्रवाहः, स च विच्छिद्य जायमानो ध्यानं भवति । तदुक्तम्— 'विलाप्य विकृतिं कृत्स्नां संभवव्यत्ययक्रमात् । परिशिष्टं च सन्मात्रं चिदानन्दं विचिन्तयेत्' इति ।। २ ।।

अ. ध्यानप्रकर्षात्संतत एकविषयप्रवाहः समाधिः, तं लक्षयति—

(सू) तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ।। ३ ।।

टि. [सम्यक् आधीयते एकाग्रीक्रियते यत्र मनः, सः समाधिः । अतिस्वच्छचित्तवृत्तिप्रवाहरूपं ध्यानमेव अर्थमात्रस्वरूपेण निर्भासमानम्]

यो - तदेव ध्यानमेव ध्येयैकगोचरतया निर्भासमानं ध्यानस्वरूप' शून्यमिव स्थितं समाधिर्भवति । तदुक्तम्— 'ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना । संप्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षतः'- इति । नात्राङ्गाङ्गिनोरत्यन्ताभेदः शङ्कनीयः, ईषद्भेदस्य विद्यमानत्वात् । तथा हि— कर्तृकरणानुसंधानपुरःसरं जायमानः प्रत्ययो ध्यानम् । तदुत्कर्षात्कर्तृकरणानुसंधानमन्तरेणैव ध्येयमात्रगोचरतया निर्भासमानः समाधिः । स एव अपरवैराग्यपुरस्ससरमादरनैरन्तर्यदीर्घकालासेवितो निरस्तरजस्तमोलेशसुखप्रकाशमयसत्त्वोद्रेकादनवद्यवशारद्यप्रद्योतनरूपश्चिरतरमनुवर्तमानः सप्रज्ञातसमाधिर्भवति । परवैराग्यपूर्वकनिरोधप्रयत्नेन तस्यापि निरोधे सर्ववृत्तिनिरोधान्निर्बीजः समाधिर्भवति । तदुक्तम्— 'मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः । या संप्रज्ञातनामासौ समाधिरभिधीयते' इत्येष विभागो द्रष्टव्यः ।। ३ ।।

अ- इत्थं पूर्वपादोद्दिष्टं धारणादित्रयं व्याख्याय, तस्य व्यवहारलाघवाय संयमसंज्ञामाह—

(सू) **त्रयमेकत्र संयमः** ।। ४ ।।

टि. [धारणा - ध्यान - समाधित्रयम् एकविषयं संयमसंज्ञं भवति ।]

यो - एकविषयं धारणादित्रयं संयमसंज्ञं भवतीत्यर्थः ।। ४ ।।

अ. ततः किम् ? अत आह—

(सू) **तज्जयात्प्रज्ञालोकः** ।। ५ ।।

यो - तस्य संयमस्य जयात् स्थैर्यात् समाधिप्रज्ञाया आलोकः ऋतंभरत्वं भवतीत्यर्थः ।। ५ ।।

अ. ननु क्व विनियुक्तः प्रज्ञालोकः फलं प्रसूते इत्यपेक्षायामाह—

(सू) **तस्य भूमिषु विनियोगः** ।। ६ ।।

यो - पूर्वोक्तसवितर्कनिर्वितर्कसविचारनिर्विचारादिभूमिषु संयमस्य विनियोगः कर्तव्यः । तत्र विनियुक्तः संयमः पूर्वपूर्वभूमिजयेनोत्तरभूमेर्निर्विचाराभिधाया वैशारद्येऽनवद्याध्यात्मख्यातिमुत्पाद्य सद्भूतार्थप्रद्योतनरूपां समाधिप्रज्ञामुत्पादयतीति तात्पर्यार्थः ।। ५ ।।

अ. अत एव संप्रज्ञातसमाधिप्रज्ञाया धारणादित्रयमन्तरङ्गमित्याह—

(सू) **त्रयम् अन्तरङ्गं पूर्वेभ्यः** ।। ७ ।।

टि. [धारणा - ध्यान - समाधयः अन्तरङ्गसाधनानि]

यो - पूर्वोक्ताः पञ्च यमादयः संप्रज्ञातस्य प्रतिबन्धकप्रत्यक्षगात्रप्राणादिमलप्रक्षयप्रणाडिकया बहिरङ्गाणि ; तेभ्यश्चित्तविषयतया सजातीयत्वाद्धारणादित्रयमन्तरङ्गमित्यर्थः ।। ७ ।।

अ. तदप्यसंप्रज्ञातस्यावृत्तिकस्य विजातीयत्वाद्बहिरङ्गमित्याह—

**(सू) तदपि बहिरङ्गं निर्बीजस्य ।। ८ ।।**

टि. [धारणाध्यानसमाधयः यद्यपि संप्रज्ञातसमाधेः अन्तरङ्गसाधनानि, परं असंप्रज्ञातसमाधेः बहिरङ्गसाधनान्येव ।]

यो - विजातीयत्वेऽपि संप्रज्ञातप्रज्ञोत्पादनद्वारोपकारितया बहिरङ्गत्वमविरुद्धम् । तदेवोपकारित्वमधस्तादसूत्रयत्सूत्रकारः— 'श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्' इति ।। ८ ।।

अ. ननु 'तदपि बहिरङ्गं निर्बीजस्य' इत्युक्तम् । कोऽसौ निर्बीजः समधिरित्यपेक्षायामाह—

**(सू) व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधलक्षणचित्तान्वयो निरोधपरिणामः ।। ९ ।।**

यो - व्युत्थानसंस्काराः समाधिविरोधिनः । ते च निरोधहेतुना योगिप्रयत्नेन प्रतिदिनं प्रतिक्षणं च अभिभूयन्ते, तद्विरोधिनश्च निरोधसंस्काराः प्रादुर्भवन्ति । तथा सति निरोध एकैकस्मिन्क्षणे चित्तमनुगच्छति । सोऽयमीदृशश्चित्तस्य निरोधपरिणामो निर्बीजः समाधिर्भवति ।। ९ ।।

अ. ननु 'प्रतिक्षणं परिणामिनो हि भावा ऋते चितिशक्तेः' इति न्यायेन चित्तस्य सर्वदा परिणामप्रवाहो वक्तव्यः ; तत्र व्युत्थितचित्तस्य वृत्तिप्रवाहः स्फुटः, निरुद्धचित्तस्य तु कथमित्याशङ्क्या उत्तरमाह–

**(सू) तस्य प्रशान्तवाहिता संस्कारात् ।। १० ।।**

यो - यथा समिदाज्याहुतिप्रक्षेपे वह्निरुत्तरोत्तरवृद्ध्या प्रज्वलति, समिदादिप्रक्षये प्रथमक्षणे किंचिच्छाम्यति, उत्तरोत्तरक्षणे शान्तिर्वर्धते;

तथा निरुद्धचित्तस्योत्तरोत्तराधिकं प्रशमः प्रवहति । तत्र पूर्वपूर्व-प्रशमजनितसंस्कार एवात्तरोत्तरप्रशमस्य कारणमित्यतः प्रशमप्रवाह-संभवान्न कोऽपि दोष इति भावः ।। १० ।।

अ. इत्थं निरोधपरिणामरूपं निर्बीजसमाधिमभिधाय संप्रज्ञात-समाधिपरिणाममभिधातुमाह—

**(सू) सर्वार्थतैकताग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ।। ११ ।।**

यो - रजोगुणेन चाल्यमानं चित्तं क्रमेण सर्वान्पदार्थान्गृह्णाति । तस्य रजोगुणस्य निरोधाय क्रियमाणेन योगिनः प्रयत्नविशेषेण दिने दिने सर्वार्थता क्षीयते, एकाग्रता चोदेति । तादृशचित्तस्य परिणामः समाधिः इत्युच्यते ।। ११ ।।

अ. ननु केयमेकाग्रतेत्यपेक्षायामाह—

**(सू) शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः ।। १२ ।।**

यो - शान्तोऽतीतः, उदितो वर्तमानः, प्रत्ययश्चित्तवृत्तिः । अतीतः प्रत्ययो यं पदार्थं गृह्णाति तमेव चेदुदितोऽपि गृह्णीयात्, तदा तौ तुल्यौ भवतः । तादृशचित्तपरिणाम एकाग्रतेत्युच्यते । इत्थं निरोधपरिणामः समाधिपरिणाम एकाग्रतापरिणामश्चेत्ययं त्रिविधः परिणामश्चित्तस्य धर्मपरिणाम इत्युच्यते । एवं लक्षणपरिणामोऽपि 'निरोधलक्षण-चित्तान्वयः' इत्यनेन सूच्यते । स यथा— निरोधस्य धर्मस्य लक्षणं अध्वत्रयम् । तत्रानागताध्वपरित्यागेन वर्तमानाध्वस्वीकारः तत्परि-त्यागेनातीताध्वस्वीकारः । एवं कालावच्छिन्नस्य तस्यैव निरोधस्या-वस्थापरिणामोऽपि 'व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ' इत्यनेन संगीयते । एवं समाध्येकाग्रतापरिणामयोर्लक्षणावस्थापरिणामौ सूत्रद्वयेन प्रेक्षावद्भिः ऊहनीयौ ।। १२ ।।

अ. इत्थम् अभिहितं परिणामत्रयं संयमाद्विभूतीर्वक्तुकामः संयमलक्ष्यत्वेनान्यत्रातिदिशति—

**(सू) एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामाः व्याख्याताः ।। १३ ।।**

टि. [निरोधसमाध्येकाग्रतेति त्रिविधोक्तचित्तपरिणामेन भूतेषु स्थूलसूक्ष्मेषु, इन्द्रियेषु चक्षुरादिषु, बुद्धिकर्मभेदेन स्थितेषु धर्मलक्षणावस्थाभेदेन त्रिविधः परिणामः उक्तः ।]

यो - एतेन त्रिधाभिहितेन चित्तधर्मादिपरिणामेन भूतेषु पृथिव्यादिषु चक्षुरादीन्द्रियेषु च धर्मिषु धर्मलक्षणावस्थापरिणामा व्याख्याता द्रष्टव्याः । तत्र मृद्रूपस्य धर्मिणो घटाकारपरिणामो धर्मपरिणामः । तस्यैव घटस्य धर्मस्यानागताध्वपरित्यागेन वर्तमानाध्वस्वीकारः तत्परित्यागेनातीताध्वपरिग्रहो लक्षणपरिणामः । तस्यैव घटस्य क्षणे क्षणे परिणामोऽवस्थापरिणामः । अतः प्रतिक्षणं परिणामिनो हि भावाः ऋते चितिशक्तेरिति संक्षेपः ।। १३ ।।

अ. धर्मस्यायं त्रिविधः परिणामः ; तद्धर्मिणं दर्शयति—

**(सू) शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ।। १४ ।।**

यो - शान्ताः कृतव्यापारा अतीताः, उदिता जलाहरणादिव्यापाराविष्टाः वर्तमानाः, अव्यपदेश्याः शक्तिरूपेण मृदादिषु धर्मिषु स्थिता अनागताः । तानेतान् घटीयन्त्रवदनिशमावर्तमानान्योऽनुपतत्यन्वेति, सोऽयमनुपाती धर्मी, यथा चूर्णपिण्डाद्यन्वितमृदादिः इत्यर्थः ।। १४ ।।

अ. नन्वेकस्य धर्मिणः परिणामबहुत्वे को हेतुःइत्यत आह—

**(सू) क्रमान्यत्वं परिणामान्यत्वे हेतुः ।। १५ ।।**

टि. [एकस्य धर्मिणः कथम् अनेके परिणामाः इत्यत्र कारणम् उपदिशति]

यो - मृदि चूर्णपिण्डयोः पिण्डघटयोर्घटकपालयोः पौर्वापर्यरूपां क्रमस्यान्यत्वं दृश्यमानमेकस्या एव मृदः परिणामानां चूर्णादीनां धर्माणामन्यत्वे हेतुर्ज्ञापकः । एवमनागतवर्तमानातीताध्वनां क्रमात् लक्षणपरिणामान्यत्वं धर्माणां ज्ञेयम् । तथा क्षणपरम्पर्या घटादीनां दुर्लक्षसूक्ष्मपरिणामक्रमेणावस्थापरिणामान्यत्व बोध्यम् ।। १५ ।।

अ. इत्थं संयमलक्ष्यमभिधाय अधुना आ पादसमाप्तेः संयमस्य तत्तद्विषये वशीकारज्ञापनाय विभूतीरभिधातुमाह—

**(सू) परिणामत्रयसंयमादतीतानागतज्ञानम् ।। १६ ।।**

यो - धर्मिण्येते धर्माः, तेष्वनागतादय एतेऽध्वानः, एता अवस्थाः, इति धर्मलक्षणावस्थारूपपरिणामत्रये संयमाद्योगिनोऽतीतानागतवस्तु-साक्षात्कारो भवति । चित्तसत्त्वं हि निसर्गतः सर्वार्थप्रद्योतनस्वभावं रजस्तमोमलप्रतिबन्धस्य संयमेन प्रक्षये सति प्रमाणमनपेक्ष्य सर्वं जानातीति भावः ।। १३ ।।

**(सू) शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरतत्प्र-विभागसंयमात्सर्वभूतरुतज्ञानम् ।। १७ ।।**

टि. [शब्दो वर्णध्वनिरूपः, अर्थः जातिगुणक्रियादिः, प्रत्ययः ज्ञानम् एषाम् इतरेतराध्यासात् - बुद्ध्येकरूपतासंपादनात् सङ्कीर्णत्वम्, तेषां प्रविभागं विधाय तस्मिन् प्रविभागे यः संयमं करोति, तस्य सर्वेषां मृगपश्वादीनां शब्दस्य ज्ञानमुत्पद्यते]

यो - गौरिति शब्दो गौरित्यर्थो गौरिति प्रत्यय इत्याबालपण्डितं शब्दार्थप्रत्ययानामितरेतराभेदाध्यासात्संकरः प्रसिद्धः । तेषां वर्णव्यङ्ग्यं पदं, पदव्यङ्ग्यं वाक्यं, शक्त्यादिवृत्त्या बोधकमिति शब्दतत्त्वम् ; अर्थो

द्रव्यादिर्वाच्यो लक्ष्यश्चेत्यर्थतत्त्वम् ; शब्दजन्योऽर्थविषयः प्रत्यय इति ज्ञानतत्त्वम् ; इति यः प्रविभागः शास्त्रयुक्तिभ्यां सिद्धस्तस्मिन्संयमात्सर्वशब्दादिवशीकारसूचकं सर्वभूतानां पक्ष्यादीनां रुतज्ञानं भवति, इममर्थमेते संगिरन्त इति संयमी जानातीत्यर्थः ।। १७ ।।

(सू) **संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम्** ।। १८ ।।

टि. [पूर्वजन्मज्ञानावबोधोपायम् उपदिशति । द्विविधा वासनासंस्काराः, केचित् स्त्मृयुत्पादनफलाः केचिज्जात्यायुर्भोगहेतवो धर्माधर्माख्याः, तेषु संयमं यदा करोति, भावनयैव पूर्ववृत्तानुसन्धानात् उद्बुद्धसंस्कारः सर्वम् अतीतं पूर्वजन्मानुभूतजात्यादिकं प्रत्यक्षेण पश्यति]

अनुभवक्लेशजाः स्मृतिक्लेशहेतवः, कर्मजाः सुखदुःखहेतवः, इति द्वये संस्काराश्चित्तधर्माः पूर्वजन्मपरम्परासंचिताः सन्ति । तेषु श्रुतेष्वनुमितेषु च संयमेन साक्षात्कृतेषु तद्धेतुत्वेन स्वीयपरकीयपूर्वजन्मपरम्परायाः साक्षात्कारो भवति । न च संस्कारसंयमात्कथं पूर्वजन्मसाक्षात्कार इति शङ्कनीयम् ; सानुवन्धसंस्कारसंयमादनुबन्धत्वेन पूर्वजन्मसाक्षात्कारोत्पत्तेः संभवादिति समञ्जसम् ।। १८ ।।

अ. सिद्ध्यन्तरमाह—

(सू) **प्रत्ययस्य परचित्तज्ञानम्** ।। १९ ।।

यो - प्रत्ययस्य परचित्तस्य संयमात्तत्साक्षात्कारो भवति इत्यर्थः ।। १९ ।।

अ. ननु संस्कारसाक्षात्कारात्तदनुबन्धसाक्षात्कारवत् किं परचित्तसाक्षात्कारादालम्बनज्ञानं भवति ? नेत्याह—

(सू) **न च तत्सालम्बनं तस्याविषयीभूतत्वात्** ।। २० ।।

यो - परचित्तमात्रं साक्षात्क्रियते; सालम्बनं सविषयं तु न साक्षात्क्रियते, तस्यालम्बनस्याज्ञातत्वात्। न हि लिङ्गादिना ज्ञाते संयमप्रवृत्तिः समस्ति। यदि परचित्तं ज्ञात्वा संयमेन साक्षात्कृत्यास्येदानीं किमालम्बनमिति स्वचित्तं प्रणिधत्ते, तदा तत्कालीनमालम्बनं जानाति। रागादिवृत्तयस्तु चित्ताभेदात्सदा साक्षात्क्रियन्त इति विशेषः ॥ २० ॥

अ. सिद्धचन्तरमाह—

**(सू) कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशसंप्रयोगेऽन्तर्धानम् ॥ २१ ॥**

टि. [योगिनः अन्तर्धानं भवति, न केनचित् असौ दृश्यत इत्याकारकसिद्धचन्तरं उपदिशति]

यो - कायस्य चाक्षुषताप्रयोजकं यद्रूपमस्ति तस्मिन्संयमात्तस्य रूपस्य परचक्षुर्ग्राह्यतानुकूलायाः शक्तेः स्तम्भे प्रतिबन्धे सति परचाक्षुषज्ञानाविषयत्वे जाते, अन्तर्धानं योगिदेहस्याचाक्षुषत्वं यथाकामं सिध्यतीत्यर्थः ॥ २१ ॥

अ. उक्तमन्यत्र अतिदिशति—

**(सू) एतेन शब्दाद्यन्तर्धानमुक्तम् ॥ २२ ॥**

यो - एतेन स्वीयशब्दस्पर्शरूपरसगन्धानां संयमाच्छ्रोत्राद्यग्राह्यत्वसिद्धिरुक्ता भवतीति वेदितव्यम् ॥ २२ ॥

**(सू) सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानम् ॥ २३ ॥**

टि. [कर्मणि क्रियमाणसंयमेन मरणकालनिश्चयो जायते इत्येतदुपदिशति]

यो - सोपक्रमं शीघ्रविपाकं कर्म, निरुपक्रमं च चिरविपाकं कर्म यत्, तत्रोभयत्र संयमेन साक्षात्कारात्तद्विपाकस्यायुषोऽपरान्तोऽवसानम्, तस्य ज्ञानममुष्मिन्देशेऽमुककाले मम कायवियोग इति साक्षात्कारो भवति ।। २३ ।।

अ. प्रसङ्गात्साधारणं मरणसूचकमाह—

**(सू) अरिष्टेभ्यो वा ।। २४ ।।**

यो - अरिवत् त्रासयन्तीत्यरिष्टानि त्रिविधानि आध्यात्मिकादीनि मरणलिङ्गानि, तेभ्यो वा मरणज्ञानं भवत्ययोगिनोऽपीत्यर्थः ।। २४ ।।

**(सू) मैत्र्यादिषु बलानि ।। २५ ।।**

यो - मैत्र्यादिषु संयमेन तेषां बलानि वीर्याणि भवन्ति, यैर्योगी प्राणिमात्रस्य सुखकरः सुहृद्भवति, दुःखादुद्धर्ता भवति । उपेक्षा त्वौदासीन्यमात्रम् । न तस्य बलं किंचित्समस्ति, संयमाभावाद् इत्यर्थः ।। २५ ।।

**(सू) बलेषु हस्तिबलादीनि ।। २६ ।।**

यो - हस्तिहनुमदादीनां बलेषु तद्भावेन संयमात्तानि बलानि योगिनः प्रादुर्भवन्ति, चित्तस्य स्वतः सर्वसामर्थ्यादित्यर्थः ।। २६ ।।

**(सू) प्रवृत्त्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् ।। २७ ।।**

टि. [सूक्ष्मानां, तिरोभूतानां, अतिदूरदेशे च विद्यमानानां वस्तूनां सिद्धिः उपदिश्यते]

यो - ज्योतिष्मती प्रवृत्तिरधस्तादभिहिता । तस्या योऽयमालोको-ज्योतिरालम्बनं निर्मलबुद्धिसत्त्वं, तस्य सूक्ष्मे परमाण्वादौ भूमिव्यवहिते

निध्यादौ विप्रकृष्टे मेर्वन्तर्वर्तिरसायनादौ च न्यासात्प्रक्षेपात्तेषां ज्ञानं साक्षात्कारो भवति ; सौरालोकसंप्रयोगात्कूटादिसाक्षात्कारवद् इत्यर्थः ।। २७ ।।

(सू) भुवनज्ञानं सूर्ये संयमात् ।। २८ ।।

यो - सुषुम्नादिसहस्रमयूखमालिनि दिवि द्योतमाने मार्तण्डमण्डले संयमाद्दृश्याभिन्नं चित्तं चतुर्दश भुवनानि साक्षात्करोतीत्यर्थः । अयमेव सकलभुवनसाक्षात्कारोऽस्मिन् शास्त्रे मधुमती सिद्धिरित्युच्यते ।। २८ ।।

(सू) चन्द्रे तारकाव्यूहज्ञानम् ।। २९ ।।

यो - नक्षत्रपतौ तुषारकरबिम्बे संयमान्नक्षत्राणां संनिवेशविशेषं साक्षात्करोति । सूर्यस्य नक्षत्राभिभावकत्वात्तत्सयमात्तत्साक्षात्कारो न भवतीति भावः ।। २९ ।।

(सू) ध्रुवे तद्गतिज्ञानम् ।। ३० ।।

यो - ध्रुवे संयमात्तासां तारकाणां गतिं जानाति— असौ तारकामुना ग्रहेण साकमनया सृत्या एतावन्तमनेहसं गच्छतीति ।। ३० ।।

अ. इत्थं बाह्यसिद्धीरभिधाय अधुनाध्यात्मिकसिद्धीरभिधातुमाह—

(सू) नाभिचक्रे कायव्यूहज्ञानम् ।। ३१ ।।

यो - कायस्य मध्यभागे यन्नाभिचक्रं मणिपूरकाख्यं दशदलम्, तस्मिन्संयमाद्देहस्य वातपित्तादिसंनिवेशविशेषं जानातीत्यर्थः ।। ३१ ।।

(सू) कण्ठकूपे क्षुत्पिपासानिवृत्तिः ।। ३२ ।।

यो - जिह्वातन्तोरधस्तात्कण्ठस्य कूपाकारः प्रदेशोऽस्ति, यत्र प्राणादेः संघर्षणात्क्षुत्पिपासे भवतः । तत्र संयमात्तन्निवृत्तिर्भवतीत्यर्थः ।। ३२ ।।

(सू) **कूर्मनाड्यां स्थैर्यम्** ।। ३३ ।।

टि. [चित्तस्य स्थैर्यतायै उपायोपदेशः]

यो - कण्ठकूपात् अधस्ताद्वक्षसि कूर्माकारा काचिन्नाड्यस्ति । तत्र संयमात्तत्प्रविष्टस्य चित्तस्य स्थैर्यं सिध्यतीत्यर्थः ।। ३३ ।।

(सू) **मूर्धज्योतिषि सिद्धदर्शनम्** ।। ३४ ।।

टि. [सिद्धपुरुषान् साक्षात् द्रष्टुं उपायः]

यो - शिरःकपालयोश्छिद्रं ब्रह्मरन्ध्राख्यं सुषुम्नायोगाद्भास्वरं मूर्धज्योतिः । तत्र संयमात्तेन निःसृता देहस्था चित्तमणिप्रभा सिद्धान् अदृश्यानपि पश्यतीत्यर्थः ।। ३४ ।।

(सू) **प्रातिभाद्वा सर्वम्** ।। ३५ ।।

यो - विवेकख्यातिर्हि प्रसंख्यानं संसारतारकम् । तदर्थं संयमे क्रियमाणे प्रसंख्यानोदयसूचकं प्रतिभया ऊहमात्रेण जातं प्रातिभं ज्ञानं भवति । तस्माद्वा योगी सर्वं जानाति । यथा सूर्योदयसूचकारुणप्रभया सर्वं लोकः पश्यति, तद्वदित्यर्थः ।। ३५ ।।

(सू) **हृदये चित्तसंवित्** ।। ३६ ।।

यो - अधोमुखे हृत्पद्मे चित्तस्थाने संयमात्सवासनचित्तस्य संविद् भवतीत्यर्थः ।। ३६ ।।

(सू) **सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थात्स्वार्थसंयमात्पुरुषज्ञानम्** ।। ३७ ।।

यो - बुद्ध्यात्मनोः भोग्यभोक्तृत्वेनात्यन्तभिन्नयोः यः प्रत्ययाविशेषो बुद्धिपरिणामैः सुखदुःखमोहप्रत्ययैः पुरुषस्य प्रतिबिम्बग्राहिभिरविशेषः

सारूप्यं प्रतिबिम्बद्वारा यः सुखाद्यारोपः, स भोगो बुद्धिस्थो दृश्यत्वात-परार्थः पुरुषस्य भोक्तुः शेषभूतः । तस्मात्परार्थाद्भोगाज्जडादन्य् श्चित्स्वभावः स्वार्थोऽनन्यशेषः पुरुषः । तत्र संयमात्पुरुषस्य साक्षात्कारो भवति । तं साक्षात्कारमपि पुरुषो जानाति । न पुनर्ज्ञाता ज्ञेयः, ज्ञातृज्ञेयत्वयोरत्यन्तविरोधादिति भावः ।। ३७ ।।

अ. अधुना अस्यैव संयमस्य पुरुषसाक्षात्कारात्प्राग्भवाः सिद्धीरुप-दर्शयति—

**(सू) ततः प्रातिभश्रावणवेदनादर्शास्वादवार्त्ता जायन्ते ।। ३८ ।।**

यो - दिव्यशब्दग्राहकं श्रोत्रं यदास्य योगिनो भवति, तदा तस्य श्रोत्रस्य श्रावणमिति तान्त्रिकी संज्ञा भवति । एवं घ्राणस्य वार्त्तेति संज्ञेत्याद्यूह्यम् ।। ३८ ।।

अ. तर्ह्ययं योगी कृतकृत्यः; किं तस्य कार्यमस्तीत्याशङ्कमानं प्रत्याह—

**(सू) ते समाधावपसर्गा व्युत्थाने सिद्धयः ।। ३९ ।।**

यो - ते प्रातिभादयः समाधावपवर्गफले उपसर्गा विघ्ना भवन्ति । अतो मोक्षमाकाङ्क्षता ते तावदुपेक्षणीयाः । यदि तत्रापेक्षा स्यात्तदा मोक्षाद्भ्रष्टः कथं कृतकृत्यतामियात्? न ह्यात्मप्रत्ययमन्तरेण कृत-कृत्यता समस्ति । न चैते स्वात्मज्ञान उपकुर्वन्ति । अपि तु व्युत्थाने सिद्धयो भवन्ति । एतदेवाभिप्रेत्योक्तम्— 'द्रव्यमन्त्रक्रियाकालशक्तयः साधु सिद्धिदाः । परमात्मपदप्राप्तौ नोपकुर्वन्ति काश्चन ।। सर्वे-च्छालाभसंशान्तौ आत्मलाभोदयो हि यः । स कथं सिद्धिवाञ्छायां मग्नचित्तेन लभ्यते' इति ।। ३९ ।।

अ. तदेवं संयमस्य साक्षात्काररूपात्मदर्शनान्तां विभूतिमभिधाय अथ क्रियारूपमाह—

(सू) बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ।। ४० ।।

टि. [तदेवं संयमस्य ज्ञानरूपां विभूतिं आत्मदर्शनान्तां उक्त्वा क्रियारूपां उपदिशति]

यो - सर्वत्रव्याप्तिशीलस्य चित्तस्य स्वशरीरमात्रे संकोचेन स्थितिर्बन्धः । तस्य कारणं धर्माधर्मौ । तयोः संयमेन यच्छैथिल्य भवति; प्रचरत्यनेन चित्तमिति प्रचारो नाडीसंघः, तस्यापि संयमेन यद्वेदनं साक्षात्कारो भवति; ताभ्यां चित्तस्य परकाये मृते जीवति वा प्रवेशो भवति । चित्तमन्विन्द्रियाण्यपि विशन्ति मक्षिका मधुकरराजमिवेत्यर्थः ।। ४० ।।

(सू) उदानजयात् जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ।। ४१ ।।

यो - समस्तेन्द्रियाणां युगपत्तूलज्वालावदुत्पन्ना या वृत्तिर्जीवशब्दवाच्या, सा क्रियाभेदेन प्राणापानादिसंज्ञाभिर्व्यपदिश्यते । तत्रोदानस्य आ नासाग्रात् आ शिरोवृत्तेः संयमेन जयाज्जलादिष्वसक्तो योगी लघुत्वादुपरि गच्छति, स्वेच्छया मरणं च लभत इत्यर्थः ।। ४१ ।।

(सू) समानजयाज्ज्वलनम् ।। ४२ ।।

यो - आ हृदयात् आ नाभि स्थितः समानः। तस्य वशीकारान्नाभिनिकटस्थाग्नेर्ज्वलनं भवति । येनासौ योगी ज्वलन्निव दृश्यत इत्यर्थः ।। ४२ ।।

(सू) श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम् ।। ४३ ।।

यो - आहंकारिकस्यापि श्रोत्रस्याकाशेनाधाराधेयभावः संबन्धोऽस्ति । तत्र संयमाद्दिव्यं श्रोत्रेन्द्रियं भवति । तेन दिव्यशब्दान्युगपज्जानातीत्यर्थः ।। ४३ ।।

(सू) कायाकाशयोः संबन्धसंयमाल्लघुतूल-
समापत्तेश्चाकाशगमनम् ।। ४४ ।।

यो - तयोः संयोगं जित्वा लघुतूलादौ वा तद्भावेन समाधिना लघुकायो भूत्वा आकाशे विहरति, तत ऊर्णातन्तुषु, पश्चान्मार्तण्ड-मयूखेषु, ततो यथेच्छं गगने गच्छतीत्यर्थः ।। ४४ ।।

(सू) बहिरकल्पिता वृत्तिर्महाविदेहा ततः
प्रकाशावरणक्षयः ।। ४५ ।।

यो - शरीरे अहंभावे सति मनसो या बहिर्वृत्तिः सा कल्पिता विदेहाख्या । यदा देहेऽहंभावपरित्यागे सति स्वत एव या मनसो बहिर्वृत्तिः सेयमकल्पिता महाविदेहाख्या । तत्र संयमात्प्रकाशशीलस्य चित्तस्य क्लेशादिमलाः सर्वे क्षीयन्त इत्यर्थः ।। ४५ ।।

(सू) स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ।। ४६ ।।

टि. [पञ्चानां भूतानां पञ्च स्थूलत्वादयो धर्माः, तत्र कृतसंयमस्य भूतजयो भवति]

यो - स्थूलं च स्वरूपं च सूक्ष्मं चान्वयश्चार्थवत्त्वं च पञ्चैतानि पञ्चभूतानां रूपाणि । तत्र क्रमेणैकैकन्यूनैः शब्दादिगुणैर्युक्तं परिदृश्यमानं स्थूलम् । क्रमेण काठिन्यस्नेहौष्ण्यप्रेरणासर्वगतत्वलक्षण स्वरूपम् । पञ्च तन्मात्राणि सूक्ष्मम् । स्वकार्यं कारणत्वेनान्वेतीत्यन्वयो गुणत्रयम् । भोगापवर्गज्ञानसामर्थ्यं गुणनिष्ठमर्थवत्त्वम् । तेषु पञ्चरूपेषु स्थूलादिक्रमेण संयमाद्भूतानि योगिसंकल्पानुसारीणि भवन्ति, धेनवो वत्सानुसारिण्य इवेत्यर्थः ।। ४६ ।।

अ. ननु अस्तु भूतजयः; किं तत इत्यत्र आह—

(सू) ततोऽणिमादिप्रादुर्भावः कायसंपत्तद्धर्मानभिघातश्च ।। ४७ ।।

यो - ततो भूतजयाद्योगिनः अणिमाद्यष्टमहासिद्धयः प्रादुर्भवन्ति । परमाणुतुल्यत्वमणिमा । विभुत्वं महिमा । तूलपिण्डवल्लघुत्वं लघिमा । मेरुवद्गुरुत्वं गरिमा । अङ्गुल्या चन्द्रस्पर्शनं प्राप्तिः । सत्यसंकल्पत्वं प्राकाम्यम् । भूतनियन्तृत्वं वशित्वम् । भूतस्रष्टृत्वमीशितृत्वम् । इत्यष्टैश्वर्याणि । अत्र प्राप्त्यन्तानि स्थूलसंयमात्सिध्यन्ति । स्वरूपसंयमात्प्राकाम्यम् । अवशिष्टमवशिष्टत्रयसंयमादिति विभागः । कायसंपद्वक्ष्यमाणलक्षणा, तद्धर्मैस्तस्य काठिन्यादिभूतधर्मैरनभिघातश्च योगिनो भूतजयात्सिध्यतीत्यर्थः ।। ४७ ।।

अ. कायसंपदं व्याख्यातुमाह—

**(सू) रूपलावण्यबलवज्रसंहननत्वानि कायसंपत् ।। ४८ ।।**

यो - चक्षुःप्रियं रूपम् । सर्वाङ्गसौन्दर्यं लावण्यम् । वीर्यं बलम् । वज्रस्येव संहननमवयवव्यूहो यस्य तद्भावो वज्रसंहननत्वम् ; तच्च हनूमति प्रसिद्धम् ।। ४८ ।।

अ. इत्थं ससाधनफलं भूतजयमभिधाय सोपायफलमिन्द्रियजयमभिधातुमाह—

**(सू) ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ।। ४९ ।।**

यो - ग्रहणं स्वरूपमस्मितान्वयोऽर्थवत्त्वं च पञ्चैतानि श्रोत्रादिपञ्चेन्द्रियाणां रूपाणि । तत्र शब्दादिगोचरा वृत्तयो ग्रहणम् । स्वरूप प्रकाशकत्वम् । अस्मिता सात्त्विकाहंकारः । अन्वयार्थवत्त्वे व्याख्याते । तेषु पञ्चस्विन्द्रियरूपेषु संयमादिन्द्रियजयो भवतीत्यर्थः ।। ४९ ।।

अ. ततः किम् ? अत आह—

**(सू) ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ।। ५० ।।**

यो - मनोजवित्वं कायस्य मनोवदनुत्तमो गतिलाभः । विकरणभावः कायनिरपेक्षाणामिन्द्रियाणामभिमतदेशकालविशेषापेक्षो वृत्तिलाभः । प्रधानजयः प्रकृतिविकारेषु वशित्वम् । एताः सिद्धयः करणपञ्चकस्वरूपजयाद्योगिनः प्रादुर्भवन्तीत्यर्थः । एता अणिमाद्याः प्रधानजयान्ताः सिद्धयोऽस्मिञ्शास्त्रे मधुप्रतीकाः संगीयन्ते । यथा मधुन एकदेशोऽपि स्वदते तथा प्रत्येकमेताः सिद्धयः स्वदन्त इति मधुप्रतीकाः, मधुतुल्या इत्यर्थः ॥ ५० ॥

अ. इत्थं संयमाच्छ्रद्धाद्वारा विवेकख्यात्यर्था ज्ञानक्रियासिद्धीरभिधाय अधुना विवेकख्यातेरवान्तरसिद्धीरभिधातुमाह—

**(सू) सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥ ५१ ॥**

यो - पूर्वोदीरितस्वार्थसंयमेन निरस्तरजस्तमोमलस्य चित्तस्य जये वशीकारसंज्ञारूपा परवैराग्ये स्थितस्य सत्त्वपुरुषयोर्विवेकख्यातिः समुत्पद्यते । तन्मात्रस्य तन्निष्ठस्य योगिनः सर्वभावाधिष्ठातृत्वं सर्वेषां व्यवसायव्यवसेयात्मकानां गुणपरिणामरूपाणां स्वामिवदाक्रमणम् । सर्वज्ञातृत्वं तेषामेव शान्तोदिताव्यपदेश्यधर्मित्वेन स्थितानां विवेकज्ञानं च सिध्यति । एषा विशोका नाम सिद्धिः ॥ ५२ ॥

अ. अधुना विवेकख्यातेर्मुख्यां सिद्धिमभिधातुमाह—

**(सू) तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ५२ ॥**

टि. [एतस्यां विशोकायां सिद्धौ यदा वैराग्यम् उत्पद्यते, तदा दोषाणां रागादीनां यद्बीजम् अविद्यादयः तस्य क्षये निर्मूलत्वे कैवल्यम् आत्यन्तकी दुःखनिवृत्तिः ।]

यो - तस्यां विशोकायां सिद्धौ वैराग्यात्तद्धेतुभूतविवेकख्यातावपि परं वैराग्यं भवति । ततः सर्वप्रतिपत्त्यस्तमये परं वैराग्यमाश्रितस्य

पुरुषधौरेयस्य क्लेशबीजानि दग्धशालिकल्पानि मनसा सार्धं प्रत्यस्तं गच्छन्ति । प्रक्षीणेषु तेषु दृढभूमावसंप्रज्ञातपदवेदनीये संस्कारशेषताव्यपदेश्ये निर्बीजसमाधौ लब्धे, शुद्धायाश्चितिशक्तेः स्वरूपप्रतिष्ठारूपं कैवल्यं सिध्यतीत्यर्थः । इयं संस्कारशेषाख्या सिद्धिः ॥ ५२ ॥

अ. अधुना अत्रान्तरायोत्पत्तौ तन्निराकरणकारणमाह—

**(सू) स्थान्युपमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् ॥ ५३ ॥**

यो - चत्वारः खल्वमी योगिनः प्रथमकल्पिको मधुभूमिकः प्रज्ञाज्योतिरतिक्रान्तभावनीयश्चेति । तत्राद्यः संयमे प्रवृत्तिमात्रो न किंचिज्जानाति । संयमेन भूतेन्द्रियाणि साक्षात्कृत्य तज्जिगीषुर्द्वितीयः । भूतेन्द्रियजयी पुरुषमाचिख्यासुस्तृतीयः । संप्राप्तपुरुषख्यातौ परवैराग्यसंपन्नश्चतुर्थः । सोऽसौ भगवान्महानुभावो जीवन्मुक्तो विघ्नशङ्काकलङ्कशून्यः । तृतीयो जितभूतेन्द्रियत्वान्महेन्द्रादिभिरक्षोभ्यः । आद्यस्तु देवनिमन्त्रणायोग्यः । अतः परिशेषाद्द्वितीयः स्थानिभिः शक्रादिभिः शक्यते प्रार्थयितुम्—'भो योगिन्, इहास्यताम् । स्वर्गादिस्थाने रम्यताम् । कमनीयेयं कन्या । दिव्योऽयं भोगः । रसायनमिदं जरामृत्युनिवारणम् । इदं कामगं यानम्' इति । एवं प्रार्थने सङ्ग आसक्तिः, 'अहो मम योगप्रभावः, इति स्मयश्च न कर्तव्यः, किं त्वित्थं तत्र दोषं भावयेत्— 'घोरेषु संसाराङ्गारेष्वहं पापच्यमानः कथंचित्क्लेशादिध्वान्तध्वंसकं योगप्रदीपमलभे । तस्यैते तृष्णायोनयो विषयवायवः प्रतिपक्षाः । स खल्वहं लब्धालोकः कथमेतैर्वञ्चितः पुनः पुनः प्रदीप्तस्य संसारहुतभुजः स्वात्मानमिन्धनीकुर्याम् ? अतः स्वस्ति वः स्वप्नसमेभ्यः कृपणजनप्रार्थनीयेभ्यो विषयेभ्यः' इति । एवं निश्चितमतिः पुरुषधौरेयः समाधिं भावयेत् । यदि तत्र सङ्गस्मयौ भवेताम्, तदास्य योगभ्रष्टस्य पुनरनिष्टं प्रसज्जेत । तस्मात्सङ्गस्मययोरकरणं कैवल्यान्तरायनिवारणकारणमित्यर्थः ॥ ५३ ॥

अ. अधस्तात् स्वार्थसंयमात्पुरुषज्ञानं भवतीत्यभिहितम् । अधुना तदेवान्यसंयमात्तावद्भवतीत्याह—

(सू) **क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम्** ।। ५४ ।।

यो - अभेद्यः कालविभागः सत्यः क्षणः । अन्ये तु मुहूर्तादयः कालविभागाः क्षणसमूहरूपा असत्याः । न हि क्षणानां समूहो वस्तुसन् । तत्रायमस्मात्पूर्वः क्षणः अयमुत्तरः क्षण इति क्षणानां तेषां क्रमस्य पौर्वापर्यस्य च संयमादतिसूक्ष्माणां भेदसाक्षात्कारो विवेको भवति। तेन युगपद्दियदादिपुरुषान्तसाक्षात्कारो जायत इत्यर्थः ।। ५४ ।।

अ. अधुना अस्य साक्षात्कारस्य सूक्ष्मं विषयविशेषमभिधातुमाह—

(सू) **जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः** ।। ५५ ।।

यो - लोके हि भावानां त्रयो भेदनिश्चयहेतवः । तत्र देशेन लक्षणेन च तुल्ययोर्गोगवययोर्जात्या भेदधीः । देशजातिभ्यां तुल्ययोर्गवोः कृष्णश्वेतादिलक्षणेन भेदधीः । जातिलक्षणाभ्यां तुल्ययोरामलकयोः पूर्वोत्तरादिदेशभेदाद् भेदनिश्चयः । यदा पुनर्योगिनो ज्ञानपरीक्षार्थं केनचित्पूर्वदेशस्थमामलकमुत्तरामलकदेशे विन्यस्योत्तरामलकमन्यव्यासक्ते योगिन्यपहृतम्, तयोरामलकयोरामलकत्वजात्या रूपपरिमाणादिलक्षणेन देशेन च तुल्ययोर्जात्यादिभिरन्यताया अनवच्छेदादनिश्चयात् ततस्तस्मात्क्षणसंयमजविवेकज्ञानादेवान्यत्वप्रतीतिर्योगिनो भवतीत्यर्थः।। ५५ ।।

अ. इत्थं विवेकज्ञानस्य विषयविशेषमभिधाय अधुना तस्य सप्रकारं विषयसामान्यमभिधातुमाह—

**(सू) तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ।। ५६ ।।**

यो - क्षणसंयमजं ज्ञानं सर्ववस्तुस्वरूपविषयं सर्वथा सर्वप्रकारविषयं पुरुषतत्त्वावगाहित्वात्संसारसागरं तारयतीति तारकसंज्ञम् अक्रमं युगपदेव करतलामलकवत्सर्वसमूहालम्बनमित्यर्थः ।। ५६ ।।

अ. अधुना तस्य विवेकज्ञानस्य फलं दर्शयितुमाह—

**(सू) सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् ।। ५७ ।।**

यो - निरस्तसमस्तरजस्तमोमलस्य बुद्धिसत्त्वस्य विवेकख्यात्या संस्कारशेषस्य सर्ववृत्तिशून्यत्वं शुद्धिः । पुरुषस्यापि नित्यशुद्धस्य तदा कल्पितभोगशून्यत्वं शुद्धिः । एवं च तयोः शुद्धिसाम्ये सति कैवल्यं पुरुषख्यात्युत्पन्नपरवैराग्येण सकलवृत्तिनिवृत्तौ तत्कृतभोगनिवृत्तेः कूटस्थनित्यशुद्धानन्तायाश्चितिशक्तेः स्वरूपप्रतिष्ठालक्षणं कैवल्यं सिध्यतीत्यर्थः । येन केन प्रकारेणोत्पन्नया पुरुषख्यात्या परवैराग्यद्वारा परमपदं कैवल्यं लभ्यत इति परमतात्पर्यम् ।। ५७ ।।

इति श्रीमत्पतञ्जलिप्रणीते योगशास्त्रे

योगसुधाकराभिधायां वृत्तौ

तृतीयः विभूतिपादः

**समाप्तः**



# कैवल्यपादः ॥

——: x :——

वीरासने समासीनं संविन्मुद्रालसत्करम् ।
कैवल्यानन्ददं कंचिज्ज्योतिर्धातुमुपास्महे ॥

अ. इत्थं पूर्वस्मिन्पादे समाधेरन्तरङ्गं संयमसंज्ञं धारणादित्रयं संयमस्य लक्ष्यभूतान्परिणामभेदाञ्श्रद्धाद्वारा कैवल्यफलकपुरुषख्यात्यर्था ज्ञानक्रियारूपाः सिद्धीश्चाभिधाय अधुना कैवल्यस्वरूपं प्राधान्येन प्रतिपादयितुकामः प्रथमं तावत्सिद्धिपञ्चकं प्रपञ्चयति—

(सू) जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥

टि. [प्रथमद्वितीयपादयोः योगतत्साधने प्रतिपादिते । तृतीये संयमसंज्ञम् अन्तरङ्गत्रयं, संयमस्य लक्ष्याः, परिणामभेदाः, सिद्धयश्च उक्ताः । तत्र काश्चिदतीतानागतज्ञानादिसिद्धयः श्रद्धाद्वारा कैवल्ययोगस्य अङ्गानि । काश्चित् इन्द्रिय जयादयः साक्षात् अङ्गानि । तारकसंज्ञिविवेकज्ञानसिद्धिः योगस्य फलमिति निरूपितम् । इदानीं कैवल्यस्वरूपं प्राधान्येन प्रतिपादनीयं, तदर्थं कैवल्यभागीदं चित्तं, परलोकः, क्षणिकविज्ञानातिरिक्तात्मा, चित्तविकारसुखादिभोक्ता, धर्ममेघश्च वक्तव्यः, प्रासङ्गिकं चान्यत् वक्तव्यम्, इति चतुर्थः पाद आरभ्यते । सामान्यतया सिद्धयःपञ्चविधाः-; जन्मजाः, मन्त्रजाः, ओषधिजाः, तपोजा समाधिजा इति ।]

यो - जन्मना पक्ष्यादीनामाकाशगमनादिसिद्धिः । ओषधी रसायनादिः ; तत्सेवया माण्डव्यादीनां कायादिसिद्धिः । मन्त्रस्त्रैपुरादिः ; तज्जवेन केषांचिदणिमादिसिद्धिः । शरीरशोषणादिकं तपः ; तेन विश्वामित्रादीनां सिद्धिः । समाधिजास्त्वधस्तादभिहिताः ॥ १ ॥

अ. ननु परमेश्वरसमाराधनादितपःप्रभावेणैव नन्दीश्वरो मनुष्यदेहेन देवत्वमगमदित्युपाख्यायते; तत्कथम्? मनुष्यदेहस्य देवशरीराकारेण परिणामायोगादित्याशङ्क्य आह—

(सू) जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥

यो - प्रधानादयः पृथिव्यन्ताः प्रकृतयः। तासां सर्वत्र विद्यमानतया नरादिदेहावयवेष्वापूराद्धर्मादिनिमित्तानुरोधेनावयवानुप्रवेशाज्जात्यन्तर-परिणामो युज्यत इत्यर्थः ॥ २ ॥

अ. ननु प्रकृत्यापूरो धर्मादिनिमित्तमपेक्षते चेत्तस्यैवास्तु प्रवर्तकत्वम्; किं तेन? न चेष्टापत्तिः, अपसिद्धान्तापातादित्याशङ्क्य आह—

(सू) निमित्तम् अप्रयोजकं प्रकृतीनां वरणभेदस्तु
ततः क्षेत्रिकवत् ॥ ३ ॥

यो - निरीश्वरसांख्येऽपि पुरुषार्थ एवानागतः प्रकृतीनां प्रवर्तकः। सेश्वराणां नस्तु तदुद्देशेनेश्वरः प्रवर्तक इत्युद्देश्यतया पुरुषार्थः प्रवर्तक इति राद्धान्तः। अतः प्रकृतीनां धर्मादिकं निमित्तं, न प्रवर्तकम्, तत्कार्यत्वात्। अपि तु ततो निमित्ताद्वरणस्य प्रतिबन्धस्य भेदो नाशो भवति। धर्मेणाधर्मनिरासे प्रकृतयः स्वयमेव देवादिपरिणामे प्रवर्तन्ते। यथा क्षेत्रिकः कृषीवलो जलस्योन्नतदेशादिवरणभेदमात्रं करोति, ततः पाथः स्वत एव केदारात्केदारान्तरे प्रवर्तते, तद्वत् इत्यर्थः ॥ ३ ॥

अ. यदा योगी युगपद्भोगार्थं बहून्कायान्निर्मिमीते, तदा तेषु कस्माच्चित्तानि भवन्तीत्यत आह—

**(सू) निर्माणचित्तान्यस्मितामात्रात् ।। ४ ।।**

टि. [अग्नेर्विस्फुलिङ्गा इव मूलकारणात् अस्मितामात्रादेव योगिनः स्वयं निर्मितेषु कायेषु चित्तानि भवन्ति ।]

यो - योगप्रभावान्निर्मीयन्त इति निर्माणानि चित्तानि योगिसंकल्पाधीनप्रकृत्यापूरात्कायवदहंकारात्स्वप्रकृतेर्जायन्त इत्यर्थ. ।। ४ ।।

अ. तर्हि चित्तानां भिन्नाभिप्रायत्वाद्योगिनो भोगासिद्धिरित्यत आह—

**(सू) प्रवृत्तिभेदप्रयोजकं चित्तमेकमनेकेषाम् ।। ५ ।।**

यो - निर्मितचित्तानां नायकं चित्तमेकं योगी स्वभोगानुकूलप्रवृत्तिविशेषनियामकं निर्मिमीते ; तेन भोगस्तदनुसंधानं च युज्यते इत्यर्थः ।। ५ ।।

अ. इत्थं जन्मादिभिः सिद्धिपञ्चकप्रपञ्चनपुरःसरं सिद्धान्तानां पञ्चविधानि चित्तान्यभिहितानि । अधुना तेष्वपवर्गभागीयं चित्तं निर्धारयितुम् आह—

**(सू) तत्र ध्यानजमनाशयम् ।। ६ ।।**

यो - तत्र तेषु जन्मादिसिद्धचित्तेषु यत्समाधिसिद्धचित्तम्, तदनाशयं क्लेशकर्मविपाकाशयशून्यमपवर्गयोग्यं भवतीत्यर्थः ।। ६ ।।

अ. इत्थम् अस्तु योगिनश्चित्तम्, तत्कर्म कीदृशमित्यपेक्षायामाह—

**(सू) कर्माशुक्लकृष्णं योगिनस्त्रिविधमितरेषाम् ।। ७ ।।**

यो - काम्यकर्म विहितत्वाच्छुक्लम् । निषिद्धं कृष्णम् । मिश्रं शुक्लकृष्णम् । तदेतत्त्रयमितरेषामयोगिनां संपद्यते । तच्च त्रिविधं

जन्म प्रयच्छति । तदुक्तम्— 'शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं गतिम् । उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः' इति । अथ योगस्यानिषिद्धत्वादकृष्णत्वेऽपि विहितत्वाच्छुक्लत्वमेवेति चेत्, मैवम् ; अकाम्यत्वाभिप्रायेणाशुक्लकृष्णत्वाभिधानात् । अतश्चित्तशुद्धिविवेकख्यातिद्वारा मोक्षैकफलकमशुक्लकृष्णं योगिनः कर्मेत्यर्थः ।। ७ ।।

अ. अधुना प्रसङ्गाद्विपाकाशयाभिव्यक्तेः कर्माभिव्यक्तिनिदानत्वमभिधातुमाह—

(सू) ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ।। ८ ।।

यो - ततो यथोदीरितत्रिविधात्मककर्मणोरनन्तरं विपाकदानायाभिव्यक्तौ सत्यां तद्विपाकानुगुणानामेव वासनानामभिव्यक्तिर्भवति, न विरुद्धानामित्यर्थः । देवत्वप्राप्तौ च चित्ते प्रसुप्ता एव नरभोगवासना भवन्ति, तासामभिव्याक्तौ दिव्यभोगायोगादिति भावः ।। ८ ।।

अ. नन्वेता नरभोगवासना देवत्वादिजन्मसहस्रव्यवधानानन्तरं कथं तर्हि पुनर्नरजन्मन्यभिव्यज्यन्त इत्याशङ्क्य आह—

(सू) जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ।। ९ ।।

यो - अनादौ संसारे येन कर्मणा यस्मिन् जन्मनि भोगैः संचिता या वासनाःतासां जन्मकोटचा स्वर्गादिदेशेन कल्पशतेन च व्यवहितानामपि तज्जातीयेन कर्मणा तस्मिञ्जन्मनि पुनः प्राप्ते सति तेनैव कर्मणा जन्मनामभिव्यक्तानामानन्तर्यं स्मृतिद्वारा भोगादिहेतुत्वं भवति । कुतः? स्मृतिसंस्कारयोरेकरूपत्वात् । क्रिया ज्ञानमन्यद्वा रागादिकं यच्छक्त्यात्मना स्थितं स संस्कारः । तत्र क्रियासंस्कारः क्रियात्मना परिणतः, ज्ञानसंस्कारः स्मृत्यात्मना, अन्यसंस्कारोऽन्यात्मना परिणत इत्येवं

स्मृतिसंस्कारयोरभेदेनैकविषयत्वेन च एकरूपत्वादानन्तर्यशब्दितः कार्यकारणभावः सजातीययोः संभवति, न विजातीययोः। न हि व्यवधानं संस्कारस्य विरूपकार्यकारित्वमापादयति; तथात्वे घटानुभवजसंस्काराद‌नन्तरमननुभूतस्मृत्यापत्तेरित्यर्थः ।। ९ ।।

अ. ननु जन्मान्तरितवासना न सन्तीति वदन्तं चार्वाकं प्रत्याह—

**(सू) तासाम् अनादित्वं चाशिषो नित्यत्वात् ।। १० ।।**

यो - न केवलं तासां वासनानामानन्तर्यम्, किं त्वनादित्वमपीति चार्थः। 'सदाहं भूयासम्' इत्याशिषो मरणत्रासस्य नित्यत्वात्सर्वजनेष्वव्यभिचारादित्यर्थः ।। १० ।।

अ. ननु वासनानामनादितया कथं तदुच्छेदः? तत्राह—

**(सू) हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ।। ११ ।।**

यो - नैताः पुरुषवदनादयः, किं तु कार्या एव प्रवाहानादयः। अतः कारणोच्छेदादुच्छेदः संभवति। तथा हि— पूर्वपूर्वसंस्कारलक्षणाविद्या ह्यस्मिताहेतुः। सा च मनुष्योऽहं ममेदमिष्टमनिष्टमिति भ्रमहेतुः। सोऽपि रागद्वेषयोः। तौ च परनिग्रहानुग्रहादिद्वारा धर्माधर्मयोः। तौ च भोगे। सोऽपि वासनासु। ताः पुनर्भ्रमादिषु। इत्यनादि संसारचक्रमनिशमावर्तते। तत्र वासनानां क्लेशकर्माणि हेतवः, जात्यायुर्भोगाः फलम्, चित्तमाश्रयः, शब्दादिकमालम्बनम्; तैः संगृहीतत्वात् आदरनैरन्तर्यसत्कारानुबन्ध्यष्टाङ्गयोगजाविप्लवविवेकख्यात्या उच्छेदे सति कारणानामभावादुच्छेदो भवतीत्यर्थः ।। ११ ।।

अ. नन्वास्तां तावदासां वासनानामुच्छेदः; किमुत्पत्तिःअसतीनां सतीनां वा? न तावदाद्यः, असंभवात्; न ह्यसतः शशविषाणस्यास्ति; नापि द्वितीयः, असंभवादेव; न हि सद्रूपायाश्चितिशक्तेरुत्पत्तिः

संभवति येन तथा स्यादित्याशङ्क्य, शक्तिरूपेण स्वप्रकृतौ विद्यमानाना-मेवाभिव्यक्तिरुत्पत्तिरित्याशयेन आह—

**(सू) अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम् ॥ १२ ॥**

टि. ["नासतो विद्यते भावः नाऽभावो विद्यते सतः" इति गीतोपदेशदर्शनात् सत्ताभूतवासनायाः कथं नाशः सम्भवेत्? इति प्राप्ते, उच्यते]

यो - अतीतानागतं धर्मजातं धर्मिणि शक्तिरूपेणास्त्येव । अत-स्तस्याभिव्यक्तिपदवेदनीयोत्पत्तिरुपपद्यते । ननु तर्हि वासनादिबन्धस्य विद्यमानत्वात्तत्त्वज्ञानवैयर्थ्यमिति चेत्, न; धर्माणामनागताद्यध्वनां भेदात् । वर्तमानाध्वनि दुःखादिवासनाचित्रं साधिकारमसंख्येयपरि-णामशीलं चित्तं भोग्यतामापन्नं बन्ध इत्युच्यते । तत्त्वज्ञाने सति निरधिकारमतीताध्वनि प्रवेशितं प्रवृत्त्यात्मना सदपि पुनर्व्युत्थानबीजस्य कर्तव्यपुरुषार्थस्य कृतत्वान्न पुनरावर्तत इत्यर्थः ॥ १२ ॥

अ. ननु स्वरूपतोऽस्तीत्युक्तम्; किं तत्स्वरूपमित्यत्र आह—

**(सू) ते व्यक्तसूक्ष्मा गुणात्मानः ॥ १३ ॥**

यो - व्यक्ता वर्तमानाध्वानः, सूक्ष्मा अतीतानागताध्वानः, ते महदा-दयो घटादिविशेषान्ता गुणात्मानः सत्त्वरजस्तमःस्वरूपाः तत्प्रकृति-कत्वात् इत्यर्थः ॥ १३ ॥

अ. ननु महदादीनां गुणत्रयपरिणामत्वेन प्रत्येकमेकत्वं न स्यादि-त्याशङ्क्य आह—

**(सू) परिणामैकत्वाद्वस्तुतत्त्वम् ॥ १४ ॥**

टि. [यद्यपि गुणाः त्रयः, तथापि तेषां अङ्गाङ्गित्वात् वस्तुनः तत्त्वं एकत्वम्]

यो - दृश्यते हि बहूनामेकः परिणामः, यथा तैलवर्त्तिवह्नीनामेकः प्रदीपपरिणामः। न च तर्हि मृत्सुवर्णक्षीराणामेकः परिणामः स्यादिति वाच्यम्; तेषामङ्गाङ्गिभावाभावात्। गुणानां त्वङ्गाङ्गिभावेन तत्परिणामस्यैकत्वाद्वस्तुनो महदादेस्तत्त्वमेकत्वं युज्यत इत्यर्थः ।। १४ ।।

अ. ननु क्षणिकविज्ञानात्मकचित्तातिरिक्तं वस्तु नास्त्येवेति वदन्तं बौद्धं प्रत्याह—

**(सू) वस्तुसाम्येऽपि चित्तभेदात्तयोर्विभक्तः पन्थाः ।। १५ ।।**

यो - तयोर्विज्ञानात्मकचित्तवस्तुनोर्विभक्तः पन्था भिन्नो मार्गः। कुतः? वस्तुतः स्त्रीपिण्डादेः साम्येऽपि चित्तानां भेदात्। यथैकस्यां नार्यां पत्युः सुखविज्ञानं सपत्न्या दुःखविज्ञानं कामुकस्य तदलाभान्मोहे विषादविज्ञानं निष्कामस्योपेक्षाविज्ञानम्; सर्वेषाम् 'या त्वया दृष्टा सा मयापि दृष्टा' इत्यबाधितविषयप्रत्यभिज्ञानादेकं वस्त्वनेकं विज्ञानमिति तयोर्भेदः। अतो न विज्ञानात्मकं सर्वं वस्तु; किं तु तस्माद्भिन्नं गुणत्रयपरिणाम इति दिक् ।। १५ ।।

अ. नन्वस्तु विज्ञानादन्यद्वस्तु; तच्चैकविज्ञानाधीनमिति वदन्तं प्रत्याह—

**(सू) न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात् ।। १६ ।।**

यो - यद्येकचित्तस्य ग्राह्यं घटवस्तु, तदा तस्मिंश्चित्ते पटादिषु व्यग्रे तद्वस्तु अप्रमाणकं किं स्यात्? न स्यादित्यर्थः। न चेष्टापत्तिः पुनस्तद्दर्शने सोऽयमित्यबाधितप्रत्यभिज्ञानात् एकस्य व्यग्रत्वेऽप्यन्येन दृश्यमानत्वाच्च। तस्मान्नैकचित्ततन्त्रं वस्तु, किं तु चित्तातिरिक्तं स्वतन्त्रमिति सिद्धम् ।। १६ ।।

अ. ननु चित्तस्याहंकारिकत्वेन सर्वगतत्वात्सर्वदा सर्वं ज्ञायेतेत्यत आह—

जन्म प्रयच्छति । तदुक्तम्— 'शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं गतिम् । उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः' इति । अथ योगस्यानिषिद्धत्वादकृष्णत्वेऽपि विहितत्वाच्छुक्लत्वमेवेति चेत्, मैवम्; अकाम्यत्वाभिप्रायेणाशुक्लकृष्णत्वाभिधानात् । अतश्चित्तशुद्धिविवेकख्यातिद्वारा मोक्षैकफलकमशुक्लकृष्णं योगिनः कर्मेत्यर्थः ।। ७ ।।

अ. अधुना प्रसङ्गाद्विपाकाशयाभिव्यक्तेः कर्माभिव्यक्तिनिदानत्वमभिधातुमाह—

**(सू) ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ।। ८ ।।**

यो - ततो यथोदीरितत्रिविधात्मककर्मणोरनन्तरं विपाकदानायाभिव्यक्तौ सत्यां तद्विपाकानुगुणानामेव वासनानामभिव्यक्तिर्भवति, न विरुद्धानामित्यर्थः । देवत्वप्राप्तौ च चित्ते प्रसुप्ता एव नरभोगवासना भवन्ति, तासामभिव्याक्तौ दिव्यभोगायोगादिति भावः ।। ८ ।।

अ. नन्वेता नरभोगवासना देवत्वादिजन्मसहस्रव्यवधानानन्तरं कथं तर्हि पुनर्नरजन्मन्यभिव्यज्यन्त इत्याशङ्क्य आह—

**(सू) जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ।। ९ ।।**

यो - अनादौ संसारे येन कर्मणा यस्मिन् जन्मनि भोगैः संचिता या वासनाःतासां जन्मकोट्या स्वर्गादिदेशेन कल्पशतेन च व्यवहितानामपि तज्जातीयेन कर्मणा तस्मिञ्जन्मनि पुनः प्राप्ते सति तेनैव कर्मणा जन्मनामभिव्यक्तानामानन्तर्यं स्मृतिद्वारा भोगादिहेतुत्वं भवति । कुतः? स्मृतिसंस्कारयोरेकरूपत्वात् । क्रिया ज्ञानमन्यद्वा रागादिकं यच्छक्त्यात्मना स्थितं स संस्कारः । तत्र क्रियासंस्कारः क्रियात्मना परिणतः, ज्ञानसंस्कारः स्मृत्यात्मना, अन्यसंस्कारोऽन्यात्मना परिणत इत्येवं

स्मृतिसंस्कारयोरभेदेनैकविषयत्वेन च एकरूपत्वादानन्तर्यशब्दितः कार्य-कारणभावः सजातीययोः संभवति, न विजातीययोः। न हि व्यवधानं संस्कारस्य विरूपकार्यकारित्वमापादयति; तथात्वे घटानुभवजसंस्कारादनन्तरमननुभूतस्मृत्यापत्तेरित्यर्थः ॥ ९ ॥

अ. ननु जन्मान्तरितवासना न सन्तीति वदन्तं चार्वाकं प्रत्याह—

**(सू) तासाम् अनादित्वं चाशिषो नित्यत्वात् ॥ १० ॥**

यो - न केवलं तासां वासनानामानन्तर्यम्, किं त्वनादित्वमपीति चार्थः। 'सदाहं भूयासम्' इत्याशिषो मरणत्रासस्य नित्यत्वात्सर्वजनेष्वव्यभिचारादित्यर्थः ॥ १० ॥

अ. ननु वासनानामनादितया कथं तदुच्छेदः? तत्राह—

**(सू) हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥ ११ ॥**

यो - नैताः पुरुषवदनादयः, किं तु कार्या एव प्रवाहानादयः। अतः कारणोच्छेदादुच्छेदः संभवति। तथा हि— पूर्वपूर्वसंस्कारलक्षणाविद्या ह्यस्मिताहेतुः। सा च मनुष्योऽहं ममेदमिष्टमनिष्टमिति भ्रमहेतुः। सोऽपि रागद्वेषयोः। तौ च परनिग्रहानुग्रहादिद्वारा धर्माधर्मयोः। तौ च भोगे। सोऽपि वासनासु। ताः पुनर्भ्रमादिषु। इत्यनादि संसारचक्रमनिशमावर्तते। तत्र वासनानां क्लेशकर्माणि हेतवः, जात्यायुर्भोगाः फलम्, चित्तमाश्रयः, शब्दादिकमालम्बनम्; तैः संगृहीतत्वात् आदरनैरन्तर्यसत्कारानुबन्ध्यष्टाङ्गयोगजाविप्लवविवेकख्यात्या उच्छेदे सति कारणानामभावादुच्छेदो भवतीत्यर्थः ॥ ११ ॥

अ. नन्वास्तां तावदासां वासनानामुच्छेदः; किमुत्पत्तिःअसतीनां सतीनां वा? न तावदाद्यः, असंभवात्; न ह्यसतः शशविषाणस्य सास्ति; नापि द्वितीयः, असंभवादेव; न हि सद्रूपायाश्चितिशक्तेरुत्पत्तिः

संभवति येन तथा स्यादित्याशङ्क्य, शक्तिरूपेण स्वप्रकृतौ विद्यमानानामेवाभिव्यक्तिरुत्पत्तिरित्याशयेन आह—

(सू) **अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम्** ।। १२ ।।

टि. ["नासतो विद्यते भावः नाऽभावो विद्यते सतः" इति गीतोपदेशदर्शनात् सत्ताभूतवासनायाः कथं नाशः सम्भवेत् ? इति प्राप्ते, उच्यते]

यो - अतीतानागतं धर्मजातं धर्मिणि शक्तिरूपेणास्त्येव । अतस्तस्याभिव्यक्तिपदवेदनीयोत्पत्तिरुपपद्यते । ननु तर्हि वासनादिबन्धस्य विद्यमानत्वात्तत्त्वज्ञानवैयर्थ्यमिति चेत्, न ; धर्माणामनागताद्यध्वनां भेदात् । वर्तमानाध्वनि दुःखादिवासनाचित्रं साधिकारमसंख्येयपरिणामशीलं चित्तं भोग्यतामापन्नं बन्ध इत्युच्यते । तत्त्वज्ञाने सति निरधिकारमतीताध्वनि प्रवेशितं प्रवृत्त्यात्मना सदपि पुनर्व्युत्थानबीजस्य कर्तव्यपुरुषार्थस्य कृतत्वान्न पुनरावर्तत इत्यर्थः ।। १२ ।।

अ. ननु स्वरूपतोऽस्तीत्युक्तम् ; किं तत्स्वरूपमित्यत्र आह—

(सू) **ते व्यक्तसूक्ष्मा गुणात्मानः** ।। १३ ।।

यो - व्यक्ता वर्तमानाध्वानः, सूक्ष्मा अतीतानागताध्वानः, ते महदादयो घटादिविशेषान्ता गुणात्मानः सत्त्वरजस्तमःस्वरूपाः तत्प्रकृतिकत्वात् इत्यर्थः ।। १३ ।।

अ. ननु महदादीनां गुणत्रयपरिणामत्वेन प्रत्येकमेकत्वं न स्यादित्याशङ्क्य आह—

(सू) **परिणामैकत्वाद्वस्तुतत्त्वम्** ।। १४ ।।

टि. [यद्यपि गुणाः त्रयः, तथापि तेषां अङ्गाङ्गित्वात् वस्तुनः तत्त्वं एकत्वम्]

यो - दृश्यते हि बहूनामेकः परिणामः, यथा तैलवर्त्तिवह्नीनामेकः प्रदीपपरिणामः। न च तर्हि मृत्सुवर्णक्षीराणामेकः परिणामः स्यादिति वाच्यम्; तेषामङ्गाङ्गिभावाभावात्। गुणानां त्वङ्गाङ्गिभावेन तत्परिणामस्यैकत्वाद्वस्तुनो महदादेस्तत्त्वमेकत्वं युज्यत इत्यर्थः ।। १४ ।।

अ. ननु क्षणिकविज्ञानात्मकचित्तातिरिक्तं वस्तु नास्त्येवेति वदन्तं बौद्धं प्रत्याह—

**(सू) वस्तुसाम्येऽपि चित्तभेदात्तयोर्विभक्तः पन्थाः ।। १५ ।।**

यो - तयोर्विज्ञानात्मकचित्तवस्तुनोर्विभक्तः पन्था भिन्नो मार्गः। कुतः? वस्तुतः स्त्रीपिण्डादेः साम्येऽपि चित्तानां भेदात्। यथैकस्यां नार्यां पत्युः सुखविज्ञानं सपत्न्या दुःखविज्ञानं कामुकस्य तदलाभान्मोहे विषादविज्ञानं निष्कामस्योपेक्षाविज्ञानम्; सर्वेषाम् 'या त्वया दृष्टा सा मयापि दृष्टा' इत्यबाधितविषयप्रत्यभिज्ञानादेकं वस्त्वनेकं विज्ञानमिति तयोर्भेदः। अतो न विज्ञानात्मकं सर्वं वस्तु; किं तु तस्माद्भिन्नं गुणत्रयपरिणाम इति दिक् ।। १५ ।।

अ. नन्वस्तु विज्ञानादन्यद्वस्तु; तच्चैकविज्ञानाधीनमिति वदन्तं प्रत्याह—

**(सू) न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात् ।। १६ ।।**

यो - यद्येकचित्तस्य ग्राह्यं घटवस्तु, तदा तस्मिंश्चित्ते पटादिषु व्यग्रे तद्वस्तु अप्रमाणकं किं स्यात्? न स्यादित्यर्थः। न चेष्टापत्तिः पुनस्तद्दर्शने सोऽयमित्यबाधितप्रत्यभिज्ञानात् एकस्य व्यग्रत्वेऽप्यन्येन दृश्यमानत्वाच्च। तस्मान्नैकचित्ततन्त्रं वस्तु, किं तु चित्तातिरिक्तं स्वतन्त्रमिति सिद्धम् ।। १६ ।।

अ. ननु चित्तस्याहंकारिकत्वेन सर्वगतत्वात्सर्वदा सर्वं ज्ञायेतेत्यत आह—

**(सू) तदुपरागापेक्षत्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ।। १७ ।।**

टि. [योगिनां सिद्धान्तरीत्या चित्तं विभु, (सर्वत्र विद्यमानम्) अतः तत्सम्बन्धस्य सर्वत्र विद्यमानत्वात् सर्वे विषयाः सदा कुतो न ज्ञातव्याः ? कस्मिंश्चित् समये कस्यचन विषयस्यैव ज्ञानं भवति इत्याशङ्क्य, समाधीयते]

यो - सर्वगतत्वेऽपि चित्तं यत्र शरीरे वृत्तिमत्तेन शरीरेण सह संबन्धो यस्य वस्तुनस्तत्रैव ज्ञानं नेतरत्र । एवं चेन्द्रियप्रणाडिकया चित्तं येन वस्तुनोपरक्तं तद्वस्तु ज्ञातम्, यदुपरक्तं न भवति तदज्ञातमित्यर्थः । अनेन चित्तं परिणामि ज्ञाताज्ञातविषयत्वाच्छ्रोत्रादिवदिति चित्तस्य परिणामित्वेऽनुमानमुक्तं भवतीत्यभिसंधिः ।। १७ ।।

अ. नन्वित्थमात्मनोऽपि परिणामित्वं किं न स्यादित्यत आह—

**(सू) सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामात् ।। १८ ।।**

यो - पुरुषोऽपरिणामी सदा ज्ञातृत्वात् न यदेवं न तदेवं यथा चित्तम् । तथा यद्यसौ पुरुषः परिणामी स्यात्तदा परिणामस्य कादाचित्कत्वात्तासां चित्तवृत्तीनां सदा ज्ञातत्वं न स्यात् । अतः सदा ज्ञातृत्वादपरिणामी पुरुष इत्यर्थः ।। १८ ।।

अ. ननु क्षणिकं चित्तमेव स्वपरावभासकमस्तु, किं पुरुषेणेत्यत आह—

**(सू) न तत्स्वभासं दृश्यत्वात् ।। १९ ।।**

यो - 'घटोऽयं रूपवान्' इतिवत् 'सुख्यहम्' 'क्रुद्धोऽहम्' 'शान्तं मे मनः' इति दृश्यत्वाच्चित्तं स्वभासं स्वप्रकाशं न भवति ; किं तु स्वातिरिक्तद्रष्टृकं न क्षणिकम्, 'सोऽहम्' इति प्रत्यभिज्ञानात् इत्युक्तम् ।। १९ ।।

अ. किं च—

**(सू) एकसमये चोभयानवधारणम् ।। २० ।।**

यो - यदि चित्तं स्वपरावभासकं स्यात्तदा तयोश्चित्तार्थयोर्जन्यजनकभावेन चित्तक्षणेऽर्थस्य अर्थक्षणे चित्तस्य चासत्त्वादेकस्मिन्नेव क्षणे

तयोरुभयोरवधारणमनुभवो न स्यात् । तस्मात्पुरुष एव चित्ताथ-योरवभासको न चित्तमित्यर्थः ।। २० ।।

अ. ननु मा नाम भूच्चित्तं स्वप्रकाशम्; चित्तान्तरेण प्रकाश्य-ताम्; किं पुरुषेणेत्याशङ्क्य आह—

**(सू) चित्तान्तरदृश्यत्वे बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसंकरश्च ।। २१ ।।**

यो - यदि नीलादिगोचरं चित्तं चित्तान्तरेण दृश्येत, तदा तदपि बुद्धयात्मकं चित्तमन्यया बुद्धया, साप्यन्ययेत्यतिप्रसङ्गः स्यात् । किं चानन्तचित्तानामनुभवे सत्यनन्तचित्तस्मृतीनां संकरः प्राप्नोति । अतः चितिशक्तिभास्यं चित्तमिति सिद्धम् ।। २१ ।।

अ. ननु कूटस्थनित्यायाश्चितिशक्तेश्चित्तेन क्रियापूर्वकसंप्रयोगासंभ-वात्कथं तत्तया भास्यमित्यत आह—

**(सू) चितेरप्रतिसंक्रमायास्तदाकारतापत्तौ स्वबुद्धिसंवेदनम् ।। २२ ।।**

टि. [योगिनां सिद्धान्ते पुरुषः क्रियारहितः। तादृशस्य कथं चित्तवृत्तीनां अनुभवसम्भवः? यः क्रियावान् स एव कर्ता। यः कर्ता स एव भोक्ता। अतः पुरुषस्य भोक्तृत्वं कथं संभवेत् इत्याशङ्क्य परिहरति। ननु कूटस्थस्य साक्षिणः चित्तेन क्रियापूर्वकसंबन्धाभावात् तेन कथं संवेद्यमित्यत आह चितेरिति।]

यो - यथा परिणामित्वाद्बुद्धितत्त्वस्य क्रियया घटादौ संप्रयोगः समस्ति, न तथा चितिशक्तेर्बुद्धितत्त्वे प्रतिसंक्रमः संप्रयोगः अपरिणा-मित्वात् । अपि तु सवितुः सलिले प्रतिबिम्बवच्चितिशक्तेर्बुद्धौ प्रतिबिम्बे सति तस्या बुद्धेश्चिदाकारतापत्तौ सत्यां स्वभोग्यबुद्धिसंवेदनं भवति । चिच्छायाग्राहित्वसंबन्धेन चिदुपरक्तं चित्तं चिद्भास्यम् इत्यनवद्यम् ।। २२ ।।

अ. ननु तर्हि केषांचिच्चित्तमेव चिदात्मेति भ्रमः कथमित्याशङ्क्य तेषां भ्रमबीजमाह—

**(सू) द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ।। २३ ।।**

टि. [चित्तमेव पुरुषस्य सर्वार्थं ग्रहीतृग्रहणग्राह्यरूपाखिलदृश्याधारभूतम् । न चित्तारिक्तं पुरुषस्य दृश्यमिति । यतो द्रष्टृदृश्याभ्यां उपरक्ता बुद्धिवृत्तिः साक्षाद्दृश्या । तदारूढतया तु द्रष्टृशब्दादिश्च दृश्यो भवतीति क्षणिकविज्ञानमेव चित्तमिति बौद्धमते चित्तातिरिक्त आत्मा प्रसाधितः । द्रष्टा पुरुषः, तेन उपरक्तं तदाकारतामिव प्राप्तं दृश्योपरक्तं विषयाकारपरिणामं यदा भवति, तदा तदेव सर्वार्थग्रहणं जायते ।।]

यो - सर्वो द्रष्टृदृश्यरूपोऽर्थो विषयो यस्य तत्सर्वार्थम् । तत्र चित्सांनिध्याच्चिद्रूपतामिव प्राप्तं द्रष्ट्रुपरक्तं द्रष्टृविषयं भवति । इन्द्रियादिद्वारा दृश्योपरक्तं तदाकारं भवति । तथा च भोग्यशब्दाद्याकारं सुखदुःखादिपरिणामलक्षणभोगात्मकं चित्तं दृश्यमपि चित्प्रतिबिम्बाभेदादात्मेति सौगतानां भ्रमः । तत्र विवेकिना चित्तस्य भोग्यतया तस्मादन्यो भोक्ता स्वीकर्तव्य इति भावः ।। २३ ।।

अ. अतश्च अन्यो भोक्ता चित्तादस्तीत्याह—

**(सू) तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् ।। २४ ।।**

टि. [चित्तादन्यः पुरुषः कश्चिदस्ति इत्यत्र प्रमाणान्तरं अनेन उपदिशति ।]

यो - यद्यपि क्लेशकर्मविपाकवासनाभिरनन्ताभिश्चित्रं सुखाद्याश्रयतया भोक्तृकल्पं चित्तम्, तथापि परस्य निरुपचरितचित्स्वभावस्यार्थौ भोगापवर्गौ साधयतीति परार्थं भोग्यमेव न भोक्ता । कस्मात्? संहत्य देहेन्द्रियादिसहकारिभिर्मिलित्वा भोगादिकार्यकारित्वात् । यन्मिलित्वा कार्यकारि तत्परार्थं, यथा गृहादि देवदत्तार्थम् । तस्माच्चित्तादन्यश्चिदात्मा भोक्तास्तीति सिद्धम् ।। २४ ।।

अ. इत्थं प्रासङ्गिकं परिसमाप्य अधुना कैवल्यं निरूपयितुं तद्योग्यम् अधिकारिणं दर्शयति—

(सू) **विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः ।। २५ ।।**

टि. [शास्त्रफलं कैवल्यं निर्णेतुं दशभिः सूत्रैः उपक्रमते]

यो - पूर्वोक्तविवेकेन बुद्धेरन्यश्चिन्मात्रः पुरुषोऽहमिति विशेषदर्शिन आत्मभावे तत्त्वे भावना जिज्ञासा विनिवर्तते, ज्ञाते जिज्ञासायोगात् । यस्य पूर्वजन्मसुकृतपरिपाकेण तत्त्वजिज्ञासा जायते, सोऽधिकारीति भावः ।। २५ ।।

अ. ननु तत्त्वजिज्ञासोर्विशेषदर्शनानन्तरं चित्तं कीदृशं भवतीत्यपेक्षायाम् आह—

(सू) **तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ।। २६ ।।**

टि. [तत्वजिज्ञासोः विशेषदर्शनानन्तरं चित्तं कथं स्यात् ? इत्येतदुपदिशति ।]

यो - पूर्वं बुद्धयादावात्मत्वभ्रमदशायां यच्चित्तं विषयनिम्नं संसारप्राग्भारमासीत्, तदिदानीं निवृत्तभ्रमस्य योगिनश्चित्तं विवेकनिम्नं द्रष्टृदृश्ययोर्विवेको निम्नमालम्बनभूमिर्यस्य तत् ; विवेकनिष्ठमिति यावत् । अत एव कैवल्यं प्राग्भारः अवधिर्यस्य तत्कैवल्यप्राग्भारं कैवल्यफलावसानं भवतीत्यर्थः ।। २६ ।।

अ. यद्येवं तदा अस्य व्युत्थानप्रत्ययाः कुतो भवन्तीत्यत आह—

(सू) **तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ।। २७ ।।**

यो - विवेकख्यातिपरस्यानुक्षणं क्षीयमाणेभ्यो व्युत्थानसंस्कारेभ्यो विवेकख्यातिच्छिद्रेष्वभिव्यक्तेभ्यः प्रत्ययान्तराणि भवन्तीत्यर्थः ।। २७ ।।

अ. ननु कोऽयमेतेषां संस्काराणां हानोपाय इत्यत्राह—

(सू) **हानमेषां क्लेशवदुक्तम् ।। २८ ।।**

यो - यथा अविद्यादिक्लेशा विवेकख्यात्या दग्धाः पुनः संस्कारं न प्रसुवते, तथा व्युत्थानसंस्कारा अपि पुरुषख्यातिदग्धा अप्रसवधर्माणो भवन्तीत्यर्थः ।। २८ ।।

अ. अथ विवेकख्यातेरपि व्युत्थानरूपतया तन्निरोधोपायमुपदर्शयितुमाह—

**(सू) प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ।। २९ ।।**

टि. [एवं प्रत्ययान्तरानुदयेन स्थिरीभूते समाधौ यादृशस्य योगिनः समाधिप्रकर्षप्राप्तिः भवति, तथाविधम् उपायमाह]

यो - विवेकख्यातिरेव विशोकरूपावान्तरफलोन्मुखी सती प्रसंख्यानमित्युच्यते । तत्रापि अकुसीदस्य, कुत्सितेषु विषयेषु सीदतीति कुसीदो रागः, तद्रहितस्य विरक्तस्य, अत एव सर्वथा सर्वात्मना विवेकख्यातेः योगिनः अशुक्लकृष्णं धर्मं कैवल्यफलं मेहति सिञ्चतीति धर्ममेघाख्यः समाधिर्भवतीत्यर्थ ।। २९ ।।

अ. ततः किमित्यत आह—

**(सू) ततः क्लेशकर्मनिवृत्तिः ।। ३० ।।**

टि. [धर्ममेघसमाधेः फलमुपदिशति अनेन सूत्रेण । धर्मम् – अशुक्लाकृष्णं कैवल्यफलं मेहति - सिञ्चति इति धर्ममेघः ।]

यो - ततो धर्ममेघात्सवासनक्लेशतन्मूलकर्मणां निवृत्तिर्भवतीत्यर्थः ।। ३० ।।

अ. तदा किं भवतीत्यत्राह—

**(सू) तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ।। ३१ ।।**

टि. [अक्लेशेनैव सर्वं जानातीत्यर्थः ।]

यो - आवृण्वन्ति चित्तमित्यावरणा रजस्तमोमयाः क्लेशकर्मरूपा मलाः । सर्वे च ते आवरणमलाः, तैर्धर्ममेघेणापेतस्य ज्ञानस्य विशुद्धबुद्ध्यालोकस्यानन्त्याज्ज्ञेयं सर्वं गगने खद्योतवदल्पमेव भवतीत्यर्थः ।। ३१ ।।

अ. ततः किमित्यत्राह—

**(सू) ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ।। ३२ ।।**

यो - ततो धर्ममेघफलीभूतपरवैराग्यात्मकानन्तज्ञानानन्तरं विवेकख्यातौ निरुद्धायाम्, कृतार्थानां कृतो निष्पादितोऽर्थो भोगापवर्गरूपः पुरुषार्थो यैस्ते तथोक्तास्तेषां सत्त्वादिगुणानां महदाद्यहंकारक्रमेण यः परिणामक्रमः तस्य समाप्तिर्भवतीत्यर्थः ।। ३२ ।।

अ. कोऽसौ क्रम इत्यपेक्षायामाह—

**(सू) क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ।। ३३ ।।**

टि. [क्षणशब्दार्थः— क्षणाः- कलांशाः, तेषु समाहितबुद्धिना क्रमो ज्ञेयः । तत्र क्षणप्रतियोगी क्रम इति स्वरूपनिर्देशः ।]

यो - क्षणप्रतियोगी क्रम इति स्वरूपनिर्देशः । क्षणौ प्रतियोगिनौ निरूपकौ यस्य स क्षणप्रतियोगी । एवं क्षणिकपरिणामक्रमो मन्तव्यः । तत्र प्रमाणं परिणामापरान्तनिर्ग्राह्य इति । मृदि पिण्डघटकपालचूर्णकणानां प्रत्यक्षपरिणामानां पूर्वान्तः पिण्डः अपरान्तः कण इति पूर्वोत्तरावधिग्रहणेन क्रमो निष्कृष्य ग्राह्यो भवतीत्यर्थः ।। ३३ ।।

अ. गुणानां परिणामक्रमसमाप्तौ किं फलिष्यतीत्यत्राह—

**(सू) पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिः इति ।। ३४ ।।**

टि. [शास्त्रेण उपदिष्टस्य योगफलभूतस्य कैवल्यस्य असाधारणं स्वरूपं उपदिशति ।]

यो - कृतभोगापवर्गाणां कार्यकारणात्मनां गुणानां प्रधाने प्रतिप्रसवः प्रलयः कैवल्यम्, चितिशक्तिः कूटस्थनित्या शुद्धासङ्गचित्स्वभावा शक्तिः स्वरूपप्रतिष्ठा पुनर्बुद्ध्यादिसंबन्धविधुरा वा कैवल्यं भवतीत्यतिशोभनम् । इतिशब्दः शास्त्रपरिसमाप्तिद्योतनार्थः ।। ३४ ।।

यत्कृपापोतमासाद्य समुत्तीर्णो भवार्णवात् ।
नमोऽस्तु तस्मै गुरवे स्वाविद्याध्वान्तभानवे ।। १ ।।

क्वाहं क्वयोगसरणिर्गहनार्था तथाप्यहम् ।
श्रीगुरोः कृपयाकार्षं वृत्तिं योगसुधाकरम् ।। २ ।।

फणीन्द्रसूत्रग्रथिता मद्वाङ्मौक्तिकमालिका ।
समर्प्यते मया श्रीमद्गुरोश्चरणपङ्कजे ।। ३ ।।

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीपरमशिवेन्द्र-
सरस्वतीपादाब्जसेवापरायणेन श्रीसदा-
शिवेन्द्रसरस्वत्या विरचितायां
श्रीमत्पतञ्जलिप्रणीते योगशास्त्रे
सांख्यप्रवचनापरनामधेये
योगसुधाकराभिधायां वृत्तौ
**चतुर्थः कैवल्यपादः**
**समाप्तः ।।**



॥ श्रीः ॥

# सूत्रानुक्रमणिका

—:(o):—



## ABBREVIATION

अ — अवतारिका

सू — सूत्रम्

टि — टिप्पणम्

यो — योगसुधाकरः

# THE SAMSKRIT EDUCATION SOCIETY (Regd).

**(Regd. Office) 16, East Mada Street, Mylapore, Madras-600 004.**

(Telephone 7 1 6 7 6)

*THE SOCIETY'S PUBLICATIONS*

1. *THE KṚDANTARŪPAMĀLĀ*—a complete concordance of verbal derivatives of 2039 roots in Sanskrit arranged in alphabetical order by **Sastra Ratnakara Kulapati, Pandit Ramasubba Sastrigal**, first head of the Society Teaching Centre and his pupils. in five Volumes (Royal Octovo) pp. lvi+1425 (per set) Rs. 100-00
2. *THE SABDATARANGINI* by **Panditaraja, Sastra Ratnakara V. Subramanya Sastrigal,** Director of Studies. Samskrit Education Society, (Demy Octovo) pp. xi+216 (Received the Sahitya Academy Award for Sanskrit 1971). Rs. 10-00
3. *THE AVYAYA KOSA* a complete alphabetical Concordance of Indeclinables in Samskrit with their meaning and illustrations. (Demy Octovo) pp. x+395. Rs. 12-00
4. *PRATAPARUDRIYA* of Vidyanatha. Standard Alamkara work of C 1300 A.D. Edited with a Critical introduction (in English) by **Dr. V. Raghavan**, Second revised enlarged edition (Royal Octove) pp. xix + 35 + 399 Rs. 25-00
5. *SANSKRIT ESSAYS* (in English) on the Value of the Language and the Literature by **Dr. V. Raghavan** (Demy Octovo) pp. x + 180
   Ordinary edition 6-00
   Library ,, 10-00
6. *NILAKANTHA VIJAYA CHAMPU* of Nilakantha Dikshita, with Commentary of Mahadeva Suri (Royal Octovo) pp. xxiv + 406.
   Ordinary edition 14-50
   Library edition 20-00
7. *BRAHMASUTRA SANKARA BHASHYA* with Commentary *BRAHMA VIDYABHARANA* of Advaitananda 'Exhaustive Edition' with Bhumika-Tippani and exhaustive Table of Contents by **Pandit S. R. Krishnamurthi Sastrigal**
   Vol. I (Royal Octovo) pp. 46 + 998 Rs. 100-00
   Vol. II 101 + 859 pp. Rs. 100-00

6

## *THE SOCIETY'S PUBLICATIONS*

8. *MANDUKYAGAUDAPADIYA & SANKARA BASHYA* with Anubhutisvarupacharya's Tippanam. (Royal Octovo) with Samskrit and English Introduction by **Pandit S. R. Krishnamurti Sastrigal** and **Pandit P. V. Sivarama Dikshitar** about 20 + 208 pp. Rs. 28-00

9. *BHAGAVAD GITA* with Sankara Bhashya, Anandagiri Tika and Bhashyotkarsha Dipika and Tippanam, by **Panditaraja V. Subramanya Sastrigal & Pandit P. V. Sivarama Dikshitar** Under print

10. *LEARNER'S SANSKRIT DICTIONARY* (of about 7300 words) with Hindi - Tamil - English meanings 725 pages. 2nd Edition Rs. 40-00

11. Graded Sanskrit Copy books (1 to 6) per set Rs. 4-00

12. Four years course graded lessons, 1st 2nd, 3rd & 4th year (each) 4-00

**(All Prices subject to revision) (Packing & Postage Extra)**

---

**LEARN SAMSKRIT AT HOME**

THROUGH CORRESPONDENCE COURSE FROM

"*SAMSKRITA SRI*" – A fortnightly Samskrit and English Journal. Contains Articles & Poems in Simple Samskrit and graded lessons through Tamil for beginners. Also useful as a Refresher Course for others—

Annual Subscription (Subsidised) .. Rs. 8/-

Additional Subscription for those who want to have their answers corrected and returned by post Rs. 8/-

---

*Also available with (1) Samskrit Education Society, Branch Office : No. 3, Thanjavur Tank Street, Tiruchirapalli-620 002.*